[ हे··· अग्ने ! त्वं···सदने तपन् ··· रुचा वर्त्तथाः,···संतपन् त्वं शिवो भव ]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः ॥ यथा सभाध्यक्षो राजा न्यायासने स्थित्वा राज्य-पालनकृत्यानि कुर्यात्, तथा प्रजा राजानं सुखयन्ती सती दुष्टान् सन्तापयेत् ॥ १२ । १६ ॥

**भावार्थ**—इस मन्त्र में वाचक-लुप्तोपमा अलङ्कार है ॥ जैसे—सभापति राजा न्यायासन पर बैठकर राज्य-पालन सम्बन्धी कार्यों को करे, वैसे प्रजा राजा को सुखी करती हुई दुष्टों को संतप्त करे ॥ १२ । १६ ॥

**भा० पदार्थः**—अग्ने=सभाध्यक्ष ! राजन् ! सदने=न्यायासने ।

**भाष्यसार**—१. **राजा-धर्म**—राजा स्वयं जातवेदः=वेदों का विद्वान् हो कर प्रजा का पालन करे । और शत्रुओं को सन्ताप देता हुआ प्रीति से प्रजा में वर्ताव करे । और सदा मंगलकारी बना रहे । प्रजा के तेज से सदा शत्रुओं को वश में रक्खे ।

२. **अलङ्कार**—इस मन्त्र में वाचकलुप्तोपमालंकार है । उपमा यह है जैसे राजा प्रजा का न्याय से पालन करे वैसे ही प्रजा राजा को सहयोग देकर राजा को सुखी करे ।

त्रितः । **अग्निः=राजा** । विराडनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

राजा के कर्म का फिर उपदेश किया है ॥

**शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥१७॥**

**पदार्थः**—(**शिवः**) स्वयं मङ्गलाचारी (**भूत्वा**) (**मह्यम्**) प्रजाजनाय (**अग्ने**) शत्रुविदारक (**अथो**) (**सीद**) (**शिवः**) मङ्गलकारी (**त्वम्**) (**शिवाः**) मङ्गलचारिणीः (**कृत्वा**) (**दिशः**) या दिश्यन्त=उपदिश्यन्ते दिग्भिः सहचरितास्ताः प्रजाः (**सर्वाः**) (**स्वम्**) (**योनिम्**) राजधर्मासनम् (**इह**) अस्मिन् जगति (**आ**) (**असदः**) आस्व ॥ १७ ॥

**अन्वयः**—हे अग्ने ! त्वं मह्यं शिवो भूत्वेह शिवः सन् सर्वा दिशः शिवाः कृत्वा स्वं योनिमासदोऽथो राजधर्मे सीद ॥ १७ ॥

**सपदार्थान्वयः**—हे **अग्ने** शत्रुविदारक ! **त्वं मह्यं** प्रजाजनाय **शिवः** स्वयं मङ्गलाचारी **भूत्वा इह** अस्मिन् जगती **शिवः** मङ्गलकारी **सन् सर्वाः दिशः** या दिश्यन्ते=उपदिश्यन्ते दिग्भिः सहचरितास्ताः प्रजाः, **शिवाः** मङ्गलचारिणीः **कृत्वा स्वं योनिं** राजधर्माऽऽसनम् **आ+असदः** आस्व, **अथो राजधर्मे सीद** ॥ १२ । १७ ॥

**भाषार्थ**—हे (अग्ने) शत्रुओं के विदारक राजन् ! आप (मह्यम्) मुझ प्रजा-जन के लिए (शिवः) स्वयं मङ्गलाचारी होकर (इह) इस जगत् में (शिवः) मङ्गलकारी होते हुए (सर्वाः) सब (दिशः) दिशाओं में विद्यमान प्रजाओं को (शिवाः) मङ्गलचारिणी बनाकर (स्वम्) अपने (योनिम्) राजधर्म के आसन पर (आ+असदः) बैठो (अथो) और राजधर्म में (सीद) स्थित रहो ॥ १२ । १७ ॥

[हे अग्ने ! त्वं मह्यं शिवो भूत्वा, इह शिवः सन्···स्वं योनिमा सदः]

**भावार्थः**—राजा स्वयं धार्मिको भूत्वा, प्रजाजनानपि धार्मिकान् संपाद्य, न्यायासनमधिष्ठाय, सततं न्यायं कुर्यात् ॥ १२ । १७ ॥

**भावार्थ**—राजा स्वयं धार्मिक होकर, प्रजा-जनों को भी धार्मिक बनाकर, न्याय-आसन पर बैठ कर सदा न्याय करे ॥ १२ । १७ ॥

**भा० पदार्थः**--अग्ने=राजन् । शिवः=धार्मिकः । योनिम्=न्यायासनम् ॥ आसदः=सततं न्यायं कुरु ॥

**भाष्यसार--राज-धर्म**--राजा स्वयं अच्छे आचरण वाला होकर मङ्गलकारी कार्य करता रहे और सभा में न्यायासन पर बैठकर सब दिशाओं में रहने वाली प्रजाओं को अच्छे आचरण वाली बनायें । और राजधर्म के पालन में कभी प्रमाद न करे ॥ १२ । १७ ॥

वत्सप्रीः । **अग्निः=राजा** । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**पुना राजविषयमाह ॥**

राजधर्म का फिर उपदेश किया है ॥

**दिवस्परि प्रथमं जज्ञे ऽ अग्निरस्मद्द्वितीयं परि जातवेदाः ।**
**तृतीयमप्सु नृमणा ऽ अजस्रमिन्धान ऽ एनं जरते स्वाधीः ॥ १८ ॥**

**पदार्थः**—(**दिवः**) विद्युतः (**परि**) उपरि (**प्रथमम्**) (**जज्ञे**) जायते (**अग्निः**) (**अस्मत्**) अस्माकं सकाशात् (**द्वितीयम्**) (**परि**) (**जातवेदाः**) जातप्रज्ञानः (**तृतीयम्**) (**अप्सु**) प्राणेषु जलेषु वा (**नृमणाः**) नृषु=नायकेषु मनो यस्य सः (**अजस्रम्**) निरन्तरम् (**इन्धानः**) प्रदीपयन् (**एनम्**) (**जरते**) स्तौति (**स्वाधीः**) शोभनाध्यानयुक्ताः प्रजाः ॥ १८ ॥

**अन्वयः**—हे सभेश ! योऽग्निरिव त्वं दिवस्परि जज्ञे तमेनं प्रथमं यो जातवेदास्त्वमस्मज्जज्ञे तमेनं द्वितीयं यो नृमणास्त्वमप्सु जज्ञे तमेनं तृतीयमजस्रमिन्धानो विद्वान् परिजरते स त्वं स्वाधीः प्रजाः स्तुहि ॥ १८ ॥

**सपदार्थान्वयः**—**हे सभेश ! योऽग्निरिव त्वं दिवः** विद्युतः **परि+ जज्ञे** उपरि+जायते **तमेनं प्रथमं, यो जातवेदाः** जातप्रज्ञानः **त्वम् अस्मत्** अस्माकं सकाशाद् **जज्ञे** जायते **तमेनं द्वितीयं, यो नृमणाः** नृषु=नायकेषु मनो यस्य सः, **त्वम् अप्सु** प्राणेषु जलेषु वा **जज्ञे** जायते, **तमेनं तृतीयम्, अजस्रं** निरन्तरम् **इन्धानः=विद्वान्** प्रदीपयन् **परि+जरते** स्तौति, **स त्वं स्वाधीः= प्रजाः** शोभनाध्यानयुक्ताः प्रजाः **स्तुहि** ॥ १२ । १८ ॥

**भाषार्थ**—हे सभापति राजन् ! जो आप (अग्निः) अग्नि के समान (दिवः) विद्युत् से (परि+जज्ञे) ऊपर हो, सो प्रथम श्रमी आप की जो आप (जातवेदाः) मेधा बुद्धि वाले (अस्मत्) हमारे सान्निध्य से (जज्ञे) बनते हो सो द्वितीय आश्रमी आप की जो आप (नृमणाः) नेताओं में मन को रखने वाले (अप्सु) प्राण=बल, जल=शान्ति में (जज्ञे) प्रसिद्ध हो सो तृतीयाश्रमी आपकी, (अजस्रम्) निरन्तर (इन्धानः) विद्या से प्रदीप्त विद्वान् (परि+जरते) स्तुति करता है, सो आप (स्वाधीः) अत्यन्त उत्कण्ठा से स्मरण करने वाली प्रजा की (स्तुहि) स्तुति करो ॥ १२ । १८ ॥

[ हे सभेश ! योऽग्निः'''तमेनं प्रथमं, यो जातवेदाः'''तमेनं द्वितीयं, यो नृमणाः तमेनं तृतीयं, अजस्र मिन्धानः ]

**भावार्थः**—मनुष्यैरादौ ब्रह्मचर्येण विद्या सुशिक्षा, द्वितीयेन गृहाश्रमेणैश्वर्यं, तृतीयेन वानप्रस्थेन तपश्चरणं, चतुर्थेन संन्यासाश्रमेण नित्यं

**भावार्थ**—मनुष्य—प्रथम ब्रह्मचर्य से विद्या और सुशिक्षा, द्वितीय गृहाश्रम से ऐश्वर्य, तृतीय वानप्रस्थ से तपस्या, चतुर्थ संन्यास आश्रम से नित्य

वेदविद्याधर्मे प्रकाशनं च कर्त्तव्यम् ॥ १२ । १८ ॥ वेदविद्या और धर्म का प्रकाश करें ॥ १२ । १८ ॥

**भा० पदार्थः**—प्रथमम्=ब्रह्मचर्यम् । द्वितीयम्=गृहाश्रमम् । तृतीयम्=वानप्रस्थम् । अजस्रम्=नित्यम् ॥

**भाष्यसार**—**राज-धर्म**—राजा का कर्त्तव्य है कि जिन्होंने प्रथमाश्रम में विद्या सुशिक्षा ग्रहण करके अपने को अग्नि के तुल्य तेजस्वी बनाया है जिन्होंने द्वितीयाऽश्रम में मेधा बुद्धि से सम्पन्न होकर ऐश्वर्य का अर्जन किया है, जिन्होंने तृतीयाश्रम में प्राणविद्या की उन्नति करके अथवा शान्ति से निरन्तर विद्या तथा तप से प्रदीप्त होते हुए मनुष्यों में नायक बने हुए हैं और जो चतुर्थाश्रम में ईश्वर की स्तुति में लगे हुए हैं, इन सभी आश्रमवासियों को सुव्यवस्था में रखे ॥ १२ । १८ ॥

वत्सप्रीः । **अग्निः**=राजा । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

राजधर्म का फिर उपदेश किया है ॥

**वि॒द्मा तें अग्ने त्रे॒धा त्र॒याणिं वि॒द्मा ते॒ धाम॒ विभृ॑ता पुरु॒त्रा ।**
**वि॒द्मा ते॒ नाम॑ पर॒मं गुहा॒ यद्वि॒द्मा तमु॒त्सं यत॑ऽआज॒गन्थ॑ ॥ १९ ॥**

**पदार्थः**—(विद्म) जानीयाम । **अत्र चतसृषु क्रियासु संहितायां द्व्यचोऽतस्तिङ इति दीर्घः ।** (ते) तव (अग्ने) विद्वन् ! (त्रेधा) त्रिभिः प्रकारैः (त्रयाणि) त्रीणि (विद्म) (ते) तव (धाम) धामानि (विभृता) विशेषेण धर्तुं योग्यानि (पुरुत्रा) पुरूणि=बहूनि (विद्म) (ते) (नाम) (परमम्) (गुहा) गुहायां स्थितं गुप्तम् (यत्) (विद्म) (तम्) (उत्सम्) कूपइवार्द्रीकरम् । **उत्स इति कूपना० ॥ निघं० ३ । २३ ॥** (यतः) यस्मात् (आजगन्थ) आगच्छेः ॥ १९ ॥

**प्रमाणार्थ**—'विद्म' यहाँ 'द्व्यचोऽतस्तिङः' इस पाणिनीय सूत्र से दीर्घ हुआ है । 'उत्सम्' यहाँ उत्स शब्द निघण्टु में (३ । २३) में कूप नामों में पढ़ा है ।

**अन्वयः**—हे अग्ने ! ते तव यानि त्रेधा त्रयाणि कर्माणि सन्ति तानि वयं विद्म । हे स्थानेश ! ते यानि विभृता पुरुत्रा धाम सन्ति तानि वयं विद्म । हे विद्वन् ! ते तव यद् गुहा परमं नामास्ति तद्वयं विद्म । यतस्त्वमाजगन्थ तं त्वामुत्समिव विद्म विजानीमः ॥ १९ ॥

**सपदार्थान्वयः**—**हे अग्ने** विद्वन् ! **ते**=**तव यानि त्रेधा** त्रिभिः प्रकारैः **त्रयाणि** त्रीणि **कर्माणि सन्ति, तानि वयं विद्म** जानीयाम ।

**हे स्थानेश** ! **ते** तव **यानि विभृता** विशेषेण धर्त्तुं योग्यानि **पुरुत्रा** पुरूणि=बहूनि **धाम** धामानि **सन्ति, तानि वयं विद्म** जानीयाम ।

**हे विद्वन्** ! **ते**=**तव यद् गुहा** गुहायां स्थितं गुप्तं **परमं नाम अस्ति, तद्वयं विद्म** जानीयाम ।

**भाषार्थ**—हे (अग्ने) विद्वान् राजन् ! (ते) आपके जो (त्रेधा) तीन प्रकार के (त्रयाणि) तीन कर्म हैं उन्हें हम (विद्म) जानें ।

हे स्थानों के स्वामी ! (ते) आप के जो (विभृता) विशेष धारण करने योग्य (पुरुत्रा) बहुत (धाम) नाम, जन्म, स्थान हैं उन्हें हम (विद्म) जानें ।

हे विद्वान् राजन् ! (ते) आपका जो (गुहा) गुहा में स्थित=गुप्त (परमम्) श्रेष्ठ (नाम) नाम है उसे हम (विद्म) जानें ।

**यतः** यस्मात् **त्वम् आ+जगन्थ** आगच्छेः, तं त्वाम् उत्सम् कूप इवाऽऽर्द्रीकरम् **इव विद्म=विजानीमः** ॥ १२ । १९ ॥

(यतः) जिससे आप(आ+जगन्थ)आते हो, हमें प्राप्त होते हो सो आपको हम (उत्सम्) आर्द्र=तृप्त करने वाले कूए के समान (विद्म) जानें।

**[हे अग्ने ! ते=तव'''त्रयाणि कर्माणि, धाम, नाम अस्ति तद् वयं विद्म]**

**भावार्थः**—प्रजास्थैर्जनैराज्ञा च राजनीतिकर्माणि, स्थानानि, सर्वेषां नामानि च विज्ञेयानि ।

**भावार्थ**—प्रजा और राजा राजनीति के कार्यों, स्थानों और सबके नामों को जानें ।

[त्वामुत्समिव विद्म]

यथा कृषीवलाः कूपाज्जलमुत्कृष्य क्षेत्रादीनि तर्पयन्ति तथैव प्रजास्थैर्धनादिभी राजा तर्पणीयो, राज्ञा प्रजाश्च तर्प्पणीयाः ॥ १२ । १९ ॥

जैसे—किसान कूए से जल को निकाल कर खेत आदि को तृप्त करते हैं वैसे ही प्रजा-जन धन आदि से राजा को तृप्त करें, और राजा प्रजा को तृप्त करे ॥ १२ । १९ ॥

**भा० पदार्थः**--धाम=स्थानानि । नाम=सर्वेषां नामानि । उत्सम्=कूपम् ॥

**भाष्यसार--राज-प्रजाधर्म**--राजा और प्रजा को योग्य है कि दोनों मिल कर एक दूसरे के सहयोग से राज्य के कार्यों को चलायें। एक दूसरे से छिपा कर कोई कार्य न करें। राज्यसम्बन्धी कार्यों को, स्थानों को और नामों को दोनों ही जानने का प्रयत्न करें। प्रजा धनादि से राजा को तथा राजा उस धन से प्रजा के हितकर कार्यों से प्रजा को सदा तृप्त किया करे ॥ १२ । १९ ॥

वत्सप्रीः । **अग्निः=राजा** । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**पुना राजप्रजासम्बन्धमाह ॥**

फिर राजा और प्रजा के सम्बन्ध का उपदेश किया है ॥

**समुद्रे त्वा नृमणा ऽ अप्स्वन्तर्नृचक्षा ऽ ईधे दिवो अग्न ऽ ऊधन् ।**
**तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा ऽ अवर्धन् ॥ २० ॥**

**पदार्थः**—(**समुद्रे**) अन्तरिक्षे (**त्वा**) त्वाम् (**नृमणाः**) नायकेषु मनो यस्य सः (**अप्सु**) अन्नेषु जलेषु वा (**अन्तः**) मध्ये (**नृचक्षाः**) नृषु=मनुष्येषु चक्षो=दर्शनं यस्य सः (**ईधे**) प्रदीपये (**दिवः**) सूर्यप्रकाशस्य (**अग्ने**) विद्वन् (**ऊधन्**) ऊधनि=उषसि । **ऊध इत्युषसो नामसु० ॥ निघं० १ । ८ ॥** (**तृतीये**) त्रयाणां पूरके (**त्वा**) त्वाम् (**रजसि**) लोके (**तस्थिवांसम्**) तिष्ठन्तम् (**अपाम्**) जलानाम् (**उपस्थे**) समीपे (**महिषाः**) महान्तो विद्वांसः । **महिष इति महन्नामसु० ॥ निघं० ३ । ३ ॥** (**अवर्धन्**) वर्धेरन् ॥ २० ॥

**प्रमाणार्थ**—'ऊधन्' यहाँ ऊधस् शब्द (निघं० १ । ८) में उषा के नामों में पढ़ा है। 'महिषाः' यहाँ महिष शब्द (निघं० ३ । ३) में महन्नामों में पढ़ा है।

**अन्वयः**—हे अग्ने ! नृमणा अहं यं त्वा समुद्रेऽग्निमिवेधे नृचक्षा अहमप्स्वन्तरीधे दिव ऊधन्नीधे तृतीये रजसि तस्थिवांसं सूर्यमिव यं त्वामपामुपस्थे महिषा अवर्धन् स त्वमस्मान् सततं वर्धय ॥ २० ॥

**सपदार्थान्वयः**—हे अग्ने विद्वन् ! **नृमणाः** नायकेषु मनो यस्य सः, **अहं यं त्वा** त्वां **समुद्रे** अन्तरिक्षे **अग्निमिव ईधे** प्रदीपये, **नृचक्षाः** नृषु=मनुष्येषु चक्षो=दर्शनं यस्य सः, **अहम् अप्सु** अन्नेषु जलेषु वा **अन्तः** मध्ये **ईधे** प्रदीप्तये, **दिवः** सूर्य्यप्रकाशस्य **ऊधन्** ऊधनि=उषसि **ईधे** प्रदीप्तये, **तृतीये** त्रयाणां पूरके **रजसि** लोके **तस्थिवांसं** तिष्ठन्तं **सूर्य्यमिव यं** [**त्वा**]=त्वाम् **अपां** जलानाम् **उपस्थे** समीपे **महिषाः** महान्तो विद्वांसः=**अवर्धन्** वर्धेरन्; **स त्वमस्मान् सततं वर्धय** ॥ १२ । २० ॥

**भाषार्थ**—हे (अग्ने) विद्वान् राजन् ! (नृमणाः) नेताओं में मन वाला मैं (त्वा) आपको (समुद्रे) अन्तरिक्ष में अग्नि के समान (ईधे) प्रदीप्त करता हूँ, (नृचक्षाः) सब मनुष्यों को देखने वाला मैं आपको (अप्सु) अन्न वा जल (अन्तः) में (ईधे) प्रकाशित करता हूँ । (दिवः) सूर्य-प्रकाश की (ऊधन्) उषा में, (तृतीये) तीसरे (रजसि) लोक में (तस्थिवांसम्) स्थित सूर्य के समान (त्वा) आपको (अपाम्) जलों के (उपस्थे) पास में (महिषा) महान् विद्वान् लोग (अवर्धन्) बढ़ावें सो आप हमें सदा बढ़ाओ ॥ १२ । २० ॥

[ हे अग्ने ! ··· यं त्वा ··· महिषा अवर्धन्, स त्वमस्मान् सततं वर्धय ]

**भावार्थः**—प्रजासु वर्तमानाः सर्वे प्रधान-पुरुषा राजवर्गं नित्यं वर्द्धयेयुः, राजपुरुषाः प्रजा-पुरुषाँश्च ॥ १२ । २० ॥

**भावार्थ**—प्रजा में विद्यमान सब प्रधान पुरुष राज-वर्ग को नित्य बढ़ावें, और राज-पुरुष प्रजाजनों को बढ़ावें ॥ १२ । २० ॥

**भा० पदार्थः**—महिषाः=प्रधानपुरुषाः ॥

**भाष्यसार**—**राज-प्रजाधर्म**—प्रजाजनों को, उन्नति पथ पर ले जाने वाले, नृचक्षाः= सभी मनुष्यों को समानता से देखने वाले, अन्नादि उत्पन्न करने में सदा सहायक, सब मनुष्यों में उत्कृष्ट राजा को सदा बढ़ाना चाहिये । इसी प्रकार राजा प्रजा को बढ़ाया करे ॥ १२ । २० ॥

वत्सप्रीः । **अग्निः=विद्युत्** । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**अथ मनुष्याः कीदृशा भवेयुरित्युपदिश्यते ॥**

अब मनुष्यों को कैसा होना चाहिये, यह उपदेश किया है ॥

**अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद् वीरुधः समञ्जन् ।**
**सद्यो जज्ञानो वि हीमिद्धो ऽ अख्यदा रोदसी भानुना भात्यन्तः ॥ २१ ॥**

**पदार्थः**—(**अक्रन्दत्**) गमयति (**अग्निः**) विद्युत् (**स्तनयन्निव**) यथा शब्दयन् (**द्यौः**) सूर्यः (**क्षामा**) पृथिवीम् । अत्रान्येषामपीत्युपधादीर्घः सुपांसुलुगिति विभक्तिलोपः । (**रेरिहत्**) ताडयति (**वीरुधः**) ओषधीः । वीरुध ओषधयो भवन्ति विरोहणात् ॥ निरु० ६ । ३ ॥ (**समञ्जन्**) प्रकटयन् (**सद्यः**) शीघ्रम् (**जज्ञानः**) जायमानः (**वि**) (**हि**) प्रसिद्धौ (**ईम्**) सर्वतः (**इद्धः**) प्रदीप्यमानः (**अख्यत्**) ख्याति (**आ**) (**रोदसी**) प्रकाशभूमी (**भानुना**) किरणसमूहेन (**भाति**) राजति (**अन्तः**) मध्ये ॥ २१ ॥

**प्रमाणार्थ**—'क्षामा' यहाँ 'अन्येषामपि दीर्घः' इस पाणिनीय सूत्र से उपधा दीर्घ और 'सुपां सुलुक्०' सूत्र से विभक्ति का लोप हुआ है । 'विरुधः' यहाँ 'वीरुध' शब्द को महर्षि यास्क ने (**निरु० ६ । ३**) में ओषधि वाचक माना है । विरुध इसलिये कहते हैं क्योंकि ये विशेष रूप से पैदा होती रहती हैं ।

**अन्वयः**—हे मनुष्याः ! यूयं यथा द्यौः सूर्योऽग्निस्तनयन्निव वीरुधः समञ्जन् सन् सद्यो ह्यक्रन्दत् । क्षामा रेरिहदयं जज्ञान इद्धः सन् भानुना रोदसी ई व्यख्यत् । ब्रह्माण्डस्यान्तरा भातीति तथा भवत ॥ २१ ॥

**सपदार्थान्वयः**—**हे मनुष्याः ! यूयं यथा द्यौः**=**सूर्य्यः अग्निः** विद्युत् **स्तनयन्निव** यथा शब्दयन् **वीरुधः** ओषधीः **समञ्जन्** प्रकटयन् **सन् सद्यः** शीघ्रं **हि** प्रसिद्धम् **अक्रन्दत्** गमयति, **क्षामा** पृथिवीं **रेरिहत्** ताडयति, **अयं जज्ञानः** जायमानः **इद्धः** प्रदीप्यमानः **सन् भानुना** किरणसमूहेन **रोदसी** प्रकाशभूमी **ई** सर्वतः **वि+अख्यत्** ख्याति, **ब्रह्माण्डस्यान्तः** मध्ये **आ+भाति** राजति, **इति तथा भवत** ॥ १२ । २१ ॥

**भाषार्थ**—हे मनुष्यो ! जैसे—(द्यौः) सूर्य (अग्निः) और विद्युत् (स्तनयन्निव) शब्द करती हुई (वीरुधः) ओषधियों को (समञ्जन्) उत्पन्न करती हुई (सद्यः) शीघ्र (हि) प्रसिद्ध रूप में (अक्रन्दत्) प्राप्त कराती है, तथा (क्षामा) पृथिवी को (रेरिहत्) ताडित करती है, और यह (जज्ञानः) उत्पन्न होकर (इद्धः) प्रदीप्त होती हुई (भानुना) किरणों से (रोदसी) प्रकाश और भूमि को (ईम्) सब ओर से (वि+अख्यत्) विख्यात करती है, तथा ब्रह्माण्ड के (अन्तः) मध्य में (आ+भाति) चमकती है वैसे—तुम बनो ॥ १२ । २१ ॥

[हे मनुष्याः ! यूयं यथा द्यौः=सूर्यः, अग्निः स्तनयन्, वीरुधः समञ्जन् ··· ब्रह्माण्डस्याऽन्तराभाति,··· तथा भवत]

**भावार्थः**—ईश्वरेण यदर्थः सूर्य उत्पादितः स विद्युदिव सर्वान् लोकानाकृष्य, संप्रकाश्य, ओषध्यादिवृद्धिहेतुः सन् सर्वभूगोलानां मध्ये यथा विराजते तथा राजादिभिर्भवितव्यम् ॥ १२ । २१ ॥

**भावार्थ**—ईश्वर ने जिस लिए सूर्य उत्पन्न किया है वह विद्युत् के समान सब लोकों का आकर्षण, प्रकाशन करके ओषधि आदि की वृद्धि का हेतु होकर सब भूगोलों के मध्य में जैसे विराजमान है वैसे राजा आदि मनुष्य भी होवें ॥

**भाष्यसार**—**सूर्याग्नि का कार्य**—सूर्य उत्पन्न होकर पृथिवी आदि लोकों का आकर्षण करके उनको प्रकाशित करता है । सूर्य ही विविध-ओषधियों को बढ़ाता है और परिपक्व करता है । सूर्य अपनी किरणों से सारे ब्रह्माण्ड को प्रकाशित करता है ॥ १२ । २१ ॥

वत्सप्रीः । **अग्निः**=**राजा** ॥ निचृदार्षी त्रिष्टुप् । धैवतः ॥

**अत्र राजकर्मणि कीदृग्जनोऽभिषेचनीय इत्याह ॥**

यहाँ राज-कार्य में कैसे पुरुष को राजा बनावें, यह उपदेश किया है ॥

**श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।**
**वसुः सूनुः सहसो ऽ अप्सु राजा विभात्यग्रं ऽ उषसामिधानः ॥ २२ ॥**

**पदार्थः**—(**श्रीणाम्**) लक्ष्मीणां मध्ये (**उदारः**) य उत्कृष्टं परीक्ष्य ऋच्छति=ददाति (**धरुणः**) धर्त्ताऽऽधारभूतः (**रयीणाम्**) धनानाम् (**मनीषाणाम्**) प्रज्ञानाम्, याभिर्मन्यन्ते=जानन्ति ता मनीषाः=प्रज्ञास्तासाम् (**प्रार्पणः**) प्रापकः (**सोमगोपाः**) सोमानामोषधीनामैश्वर्य्याणां वा रक्षकः (**वसुः**) कृतब्रह्मचर्य्यः (**सूनुः**) सुतः (**सहसः**) बलवतः पितुः (**अप्सु**) प्राणेषु (**राजा**) प्रकाशमानः (**वि**) (**भाति**) प्रदीप्यते (**अग्रे**) संमुखे (**उषसाम्**) प्रभातानाम् (**इधानः**) प्रदीप्यमानः ॥ २२ ॥

**अन्वयः**—हे मनुष्याः ! यूयं यो जन उषसामग्र इधानः सूर्य इव श्रीणामुदारो रयीणां धरुणो मनीषाणां प्रार्पणः सोमगोपाः सहसः सूनुर्वसुः सन्नप्सु राजा विभाति तं सर्वाध्यक्षं कुरुत ॥ २२ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! यूयं **यो जन उषसां** प्रभातानाम् **अग्रे** संमुखे **इधानः**=**सूर्यः** प्रदीप्यमानः **इव श्रीणां** लक्ष्मीणां मध्ये **उदारः** य उत्कृष्टं परीक्ष्य ऋच्छति=ददाति, **रयीणां** धनानां **धरुणः** धर्त्ताऽऽधारभूतः **मनीषाणां** प्रज्ञानां, याभिर्मन्यन्ते=जानन्ति ता मनीषाः=प्रज्ञास्तासां **प्रार्पणः** प्रापकः, **सोमगोपाः** सोमानामोषधीनामैश्वर्य्याणां वा रक्षकः, **सहसः** बलवतः पितुः **सूनुः** सुतः **वसुः** कृतब्रह्मचर्य्यः **सन्नप्सु** प्राणेषु **राजा** प्रकाशमानः **वि+भाति** प्रदीप्यते, तं **सर्वाऽध्यक्षं कुरुतः** ॥ १२ । २२ ॥

**भाषार्थ**—हे मनुष्यो ! तुम जो (उषसाम्) प्रभात-वेलाओं के (अग्रे) सम्मुख (इधानः) प्रदीप्यमान सूर्य के समान, (श्रीणाम्) लक्ष्मी का (उदारः) परीक्षापूर्वक उत्कृष्ट दान करने वाला, (रयीणाम्) धनों का (धरुणः) आधार, (मनीषाणाम्) जानने का साधन प्रज्ञाओं=बुद्धियों को (प्रार्पण) प्राप्त कराने वाला, (सोमगोपाः) सोम=ओषधियों वा ऐश्वर्यों का रक्षक, (सहसः) बलवान् पिता का (सूनुः) पुत्र (वसुः) वसु ब्रह्मचारी बनकर (अप्सु) प्राणों में (राजा) प्रकाशमान होकर (वि+भाति) चमकता है, उसे सर्वाध्यक्ष=राजा बनावें ॥ १२ । २२ ॥

**[हे मनुष्याः ! यो जनः····श्रीणामुदारः, रयीणां धरुणः, मनीषाणां प्रापणः, सहसः सूनुर्वसुः, अप्सु राजा, उषामग्रं इधानः सूर्य इव, सोमगोपाः]**

**भावार्थः**—मनुष्यैर्यः सुपात्रेभ्यो दाता, धनस्य व्यर्थव्ययस्याकर्त्ता, सर्वेषां विद्याबुद्धिप्रदः, कृतब्रह्मचर्यस्य जितेन्द्रियस्य तनयः, योगाङ्गानुष्ठानेन प्रकाशमानः, सूर्यवत् शत्रुगुणकर्मस्वभावानां मध्ये देदीप्यमानः, पितृवत् प्रजापालको जनोऽस्ति, स राज्यकरणायाभिषेचनीयः ॥ १२ । २२ ॥

**भावार्थ**--मनुष्य-जो सुपात्रों को दान देने वाला, धन को व्यर्थ व्यय न करने वाला, सब को विद्या और बुद्धि देने वाला, ब्रह्मचारी, जितेन्द्रिय का पुत्र, योगाङ्गों के अनुष्ठान से प्रकाशमान, सूर्य के समान शत्रु के गुण, कर्म, स्वभावों में देदीप्यमान, पिता के समान प्रजा का पालक पुरुष है, उसका राज्य-कर्म के लिये अभिषेक करें ॥ १२ । २२ ॥

**भा० पदार्थः**--उदारः=सुपात्रेभ्यो दाता । धरुणः=व्यर्थव्ययस्याकर्त्ता । मनीषाणाम्=विद्याबुद्धीनाम् । प्रार्पणः=प्रदः । सहसः=कृतब्रह्मचर्यस्य जितेन्द्रियस्य । सूनुः=तनयः । अप्सु=योगाङ्गानुष्ठाने । राजा=प्रकाशमानः । उषसाम्=शत्रुगुणकर्मस्वभावानाम् । अग्रे=मध्ये । इधानः=देदीप्यमानः । सोमगोपाः=पितृवत् प्रजापालकः ।

**भाष्यसार**--**राजधर्म**--जिसने ब्रह्मचर्य का पालन करके सभी प्रकार की शक्तियों का विकास किया है और जो सूर्य की तरह शत्रु वर्ग में प्रकाशमान है । और शुभ कार्यों में लोभ न करके उदारता से दान देने वाला है और सभी प्रकार की प्राणपोषक ओषधियों का रक्षक हो । वह राजा बनने के योग्य है । राजा बनाने से पूर्व यह भी ध्यान रखना चाहिये कि ऊँचे कुल में पैदा हुआ हो तथा शूरवीर पिता का पुत्र हो ॥ १२ । २२ ॥

वत्सप्रीः । **अग्निः**=**राजा** । आर्चीत्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

राजकर्म में कैसे पुरुष का अभिषेक करे, यह फिर उपदेश किया है ॥

**विश्व॑स्य के॒तुर्भुव॑नस्य॒ गर्भ॒ऽ आ रोद॑सी ऽ अपृणा॒ज्जाय॑मानः ।**
**वी॒डुं चि॒दद्रि॑मभिनत् परा॒यञ्जना॒ यद॒ग्निमय॑जन्त॒ पञ्च॑ ॥ २३ ॥**

**पदार्थः**—(**विश्वस्य**) (**केतुः**) (**भुवनस्य**) भवन्ति भूतानि यस्मिंस्तस्य लोकमात्रस्य (**गर्भः**) अन्तःस्थः (**आ**) (**रोदसी**) प्रकाशभूमी (**अपृणात्**) प्रपूर्यात् (**जायमानः**) उत्पद्यमानः (**वीडुम्**) दृढबलम् (**चित्**) इव (**अद्रिन्**) मेघम् (**अभिनत्**) भिन्द्यात् (**परायन्**) परेतः सन् (**जनाः**) (**यत्**) यः (**अग्निम्**) विद्युतम् (**अयजन्त**) संगमयन्ति (**पञ्च**) प्राणाः ॥ २३ ॥

**अन्वयः**—हे मनुष्या ! यद्यो विद्वान् विश्वस्य भुवनस्य केतुगर्भो जायमानः परायन् रोदसी आपृणाद्वीडुमद्रिमभिनत् पञ्चजना अग्निमयजन्त चिदिव विद्यादिशुभगुणान् प्रकाशयन्तं न्यायाधीशं मन्यध्वम् ॥ २३ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! यत्=यो विद्वान् विश्वस्य भुवनस्य भवन्ति भूतानि यस्मिंस्तस्य लोकमात्रस्य केतुः, गर्भः अन्तस्थः, जायमानः उत्पद्यमानः परायन् परेतः सन् रोदसी प्रकाशभूमी आ+अपृणात् प्रपूर्यात्, वीडुं दृढबलम् अद्रिंमेघम् अभिनत् भिन्द्यात् पञ्च प्राणाः जनाः अग्निं विद्युतम् अयजन्त संगमयन्ति, चित्=इव विद्याऽऽदिशुभगुणान् प्रकाशयेत्, तं न्यायाधीशं मन्यध्वम् ॥ १२ । २३ ॥

**भाषार्थ**—हे मनुष्यो ! (यत्) जो विद्वान् (विश्वस्य) सब (भुवनस्य) प्राणियों के निवास-स्थान लोकमात्र को (केतुः) प्राप्त करने वाला, (गर्भः) अन्दर रहने वाला, (जायमानः) सुखों का उत्पादक, (परायन्) शत्रुओं का उच्छेदक होकर (रोदसी) द्यौ और भूमि को (आ+अपृणात्) परिपूर्ण करे, (वीडुम्) दृढ़ बल वाले (अद्रिम्) मेघ का (अभिनत्) भेदन करे, (चित्) जैसे (पञ्च) पाँच प्राण रूप पुरुष (अग्निम्) विद्युत् का (अयजन्त) संग करते हैं वैसे विद्या आदि शुभगुणों को प्रकाशित करे, उसे न्यायाधीश मानें ॥ १२ । २३ ॥

[हे मनुष्या ! यत्=यो विद्वान् विश्वस्य भुवनस्य केतुः, वीडुमद्रिमभिनत्, गर्भः]

**भावार्थः**—अत्रोपमालङ्कारः ॥ यथा भुवनस्य मध्ये सूर्य आकर्षणेन सर्वविद्याप्रापकः, राज्य-धर्त्ता, शत्रूच्छेदकः, सुखानां जनयिता, गर्भस्य मातेव प्रजापालको विद्वान् भवेत्, तं राज्याधिकारिणं कुर्यात् ॥ १२ । २३ ॥

**भावार्थ**—इस मन्त्र में उपमा अलङ्कार है ॥ जैसे लोक में सूर्य आकर्षण से सबको धारण करता है वैसे जो सब विद्याओं को प्राप्त कराने वाला, राज्य को धारण करने वाला, शत्रुओं का उच्छेद करने वाला, सुखों का उत्पादक, जैसे माता गर्भ का पालन करती है वैसे प्रजा का पालक विद्वान् हो, उसे राज्याधिकारी बनावें ॥

**भाष्यसार**—१. **राजा के योग्य गुण**—राजा स्वयं विद्वान् होकर, प्राणीमात्र को सुख प्राप्त कराने की इच्छा से सभी के निवास की व्यवस्था करे। सभी मनुष्य के मन की बातों को दूतों के द्वारा जानकर शत्रुओं का विनाश करे और प्रजा के सुखों को बढ़ावे । अपने पराक्रम से उत्पन्न यश से द्युलोक तथा पृथिवी लोक को परिपूर्ण करे। यज्ञादि के द्वारा वृष्टि को न होने देने वाले तत्त्वों का भेदन करे। और विद्यादि शुभ गुणों की वृद्धि के लिए सतत प्रयत्न करे।

२. **अलङ्कार**—इस मन्त्र में उपमालङ्कार है। उपमा यह है जैसे सूर्य सब लोकों का आकर्षण

करके प्रकाशित करता है वैसे ही राजा भी अपने सद्व्यवहार से सब प्रजा को सुख देता हुआ विद्यादि को बढ़ाता रहे ॥ १२ । २३ ॥

वत्सप्रीः । **अग्निः=कारणाख्यः** । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**पुनर्मनुष्यैः किं कर्त्तव्यमित्याह ॥**

फिर मनुष्यों को क्या करना चाहिये, यह उपदेश किया है ॥

**उ॒शिक् पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्त्ये॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि ।**
**इय॑र्त्ति धू॒मम॑रु॒षं भरि॑भ्र॒दुच्छु॒क्रेण॑ शो॒चिषा॒ द्यामिन॑क्षन् ॥ २४ ॥**

**पदार्थः**—(**उशिक्**) कामयमानः (**पावकः**) पवित्रकर्त्ता (**अरतिः**) ज्ञाता (**सुमेधाः**) शोभनप्रज्ञः (**मर्त्येषु**) (**अग्निः**) कारणाख्यः (**अमृतः**) अविनाशी (**नि**) (**धायि**) निधीयते (**इयर्त्ति**) प्राप्नोति (**धूमम्**) (**अरुषम्**) रूपम् (**भरिभ्रत्**) अत्यन्तं धरन् पुष्यन् (**उत्**) (**शुक्रेण**) आशुकरेण (**शोचिषा**) दीप्त्या (**द्याम्**) सूर्यम् (**इनक्षन्**) व्याप्नुवन् । इनक्षतीति व्याप्तिकर्म० ॥ निघं० २ । १८ ॥ २४ ॥

**प्रमाणार्थ**—'इनक्षन्' यहाँ व्याप्त्यर्थक-इनक्षति क्रिया है। इसका निघण्टु (२ । १८) में व्याप्त्यर्थक क्रियाओं में पाठ है।

**अन्वयः**—हे मनुष्याः ! यूयमीश्वरेण मर्त्येषु य उशिक् पावकोऽरतिः सुमेधाऽमृतोऽग्निर्निधायि यः शुक्रेण शोचिषा द्यामिनक्षन् धूममरुषं भरिभ्रदुदियर्त्ति तमीश्वरमुपाध्वमुपकुरुत वा ॥ २४ ॥

**सपदार्थान्वयः**—**हे मनुष्याः ! यूयमीश्वरेण मर्त्येषु य उशिक्** कामयमानः **पावकः** पवित्रकर्त्ता (**अरतिः**) ज्ञाता **सुमेधाः** शोभनप्रज्ञः **अमृतः** अविनाशी **अग्निः** कारणाऽऽख्यः **नि+धायि** निधीयते, **यः शुक्रेण** आशुकरेण **शोचिषा** दीप्त्या **द्यां** सूर्यम् **इनक्षन्** व्याप्नुवन् **धूमम् अरुषं** रूपं **भरिभ्रत्** अत्यन्तं धरन् पुष्यन् **उत्+इयर्त्ति** प्राप्नोति **तमीश्वरमुपाध्वमुपकुरुत वा** ॥ १२ । २४ ॥

**भाषार्थ**—हे मनुष्यो ! तुम—ईश्वर ने मनुष्यों में जो (उशिक्) कामना के योग्य, (पावकः) पवित्र करने वाला, (अरतिः) ज्ञाता, (सुमेधाः) मेधावी विद्वान् तथा (अमृतः) अविनाशी (अग्निः) कारण रूप अग्नि (नि+धायि) स्थापित किया है, जो (शुक्रेण) आशुकारी (शोचिषा) दीप्ति से (द्याम्) सूर्य को (इनक्षन्) व्याप्त करता हुआ (धूमम्) धूम (अरुषम्) रूप को (भरिभ्रत्) अत्यन्त धारण करके (उत्+इयर्त्ति) ऊपर पहुँचता है, उस ईश्वर की उपासना करो वा उपकार करो ॥ १२ । २४ ॥

[हे मनुष्याः !···ईश्वरेण मर्त्येषु···अरतिः सुमेधा···अग्निर्निधायि]

**भावार्थः**—मनुष्यैरीश्वरसृष्टानां पदार्थानां कारणकार्यपुरस्सरं विज्ञानं कृत्वा प्रज्ञोन्नेया ॥

**भावार्थ**—मनुष्य—ईश्वर के रचे पदार्थों का कारण कार्य पूर्वक विज्ञान करके बुद्धि को बढ़ावें ॥

**भाष्यसार**—**ईश्वर के गुणों का वर्णन**—ईश्वर सब से श्रेष्ठ होने से कामना करने के योग्य, पवित्र करने वाला, सर्वज्ञ और सुमेधा वाला है। कभी नष्ट न होने से अमृत है, अपनी दीप्ति से

सूर्यादि को प्रकाशित करता है। वह आशुकारी होने से शुक्र है। ईश्वर ही सारी सृष्टि का कर्त्ता, धर्त्ता तथा भर्त्ता है। वही उपस्य है ॥ १२ । २४ ॥

वत्सप्रीः । **अग्निः**=जगदीश्वरः । भुरिक्पङ्क्तिः । पञ्चमः ॥

पुनर्नरैः किं किं वेद्यमित्याह ॥

फिर मनुष्यों को क्या-क्या जानना चाहिये, यह उपदेश किया है ॥

दृशानो रुक्म ऽ उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो ऽ अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥ २५ ॥

**पदार्थः**--(दृशानः) दर्शकः (रुक्मः) (उर्व्या) पृथिव्या सह (वि) (अद्यौत्) प्रकाशयति (दुर्मर्षम्) दुर्गतो मर्षः=सेचनं यस्मात्तत् (आयुः) जीवनम् (श्रिये) शोभायै (रुचानः) प्रदीपकः (अग्निः) तेजः (अमृतः) नाशरहितः (अभवत्) (वयोभिः) व्यापकैर्गुणैः (यत्) यस्मात् (एनम्) (द्यौः) स्वप्रकाशः (अजनयत्) जनयति (सुरेताः) शोभनानि रेतांसि=वीर्याणि यस्य सः ॥ २५ ॥

**अन्वयः**—हे मनुष्याः ! यूयं यद्यो दृशानो रुक्मः श्रिये रुचानोऽमृतो दुर्मर्षमायुः कुर्वन्नमृतोऽग्निरुर्व्या सह व्यद्यौद्वयोभिः सहाभवत् । तद्द्यौः सुरेता जगदीश्वरो यदेनमजनयत्तं तत्तां च विजानीत ॥ २५ ॥

**सपदार्थान्वयः**—**हे मनुष्याः ! यूयं यत्**=**यो दृशानः** दर्शकः **रुक्मः श्रिये** शोभायै **रुचानः** प्रदीपकः **अमृतः** नाशरहितः **दुर्मर्षं** दुर्गतो मर्षः=सेचनं यस्मात् तत्, **आयुः** जीवनं **कुर्वन्नमृतः** नाशरहितः **अग्निः** तेजः **उर्व्या** पृथिव्या **सह वि+अद्यौत्** प्रकाशयति, **वयोभिः** व्यापकैर्गुणैः **सह अभवत्, तद् द्यौः** स्वप्रकाशः **सुरेताः**=**जगदीश्वरः** शोभनानि रेतांसि=वीर्य्याणि यस्य सः, **यत्** यस्माद् **एनम् अजनयत्** जनयति **तं तत्तां च विजानीत** ॥१२।२५॥

**भाषार्थ**—हे मनुष्यो ! तुम—(यत्) जो (दृशानः) दिखाने वाला, (रुक्मः) सुनहरी, (श्रिये) शोभा के लिए (रुचानः) प्रदीपक, (अमृतः) नाशरहित, (दुर्मर्षम्) दुःख-रहित (आयुः) जीवन को बनाने वाला (अमृतः) अविनाशी (अग्निः) तेजः-स्वरूप अग्नि (उर्व्या) पृथिवी के साथ पदार्थों को (वि+अद्यौत्) प्रकाशित करता है, (वयोभिः) व्यापक-गुणों से युक्त (अभवत्) है, वह (द्यौः) स्वप्रकाशस्वरूप (सुरेताः) उत्तम बलों वाला जगदीश्वर (यत्) जिससे (एनम्) इसे (अजनयत्) उत्पन्न करता है, उस जगदीश्वर, आयु और विद्युत्=अग्नि को जानो ॥ १२ । २५ ॥

[हे मनुष्याः! यूयं ...वयोभिः सह ...तद् द्यौः सुरेताः=जगदीश्वरो यदेनमजनयत्, तं तत् तां च विजानीत]

**भावार्थः**—हे मनुष्या जगत्स्रष्टारमनादिमीश्वरमनादिजगत्कारणं गुणकर्मस्वभावैः सह विज्ञायोपासत उपयुञ्जते च,

**भावार्थ**—जो मनुष्य जगत् के स्रष्टा, अनादि ईश्वर एवं अनादि जगत् के कारण=प्रकृति को गुण, कर्म, स्वभाव से जानकर ईश्वर की उपासना और प्रकृति का उपयोग करते हैं—

[रुक्मः श्रिये......आयुः कुर्वन्]

ते दीर्घायुषः श्रीमन्तो जायन्ते ॥ १२ । २५ ॥

वे दीर्घायु, श्रीमान् होते हैं ॥ १२ । २५ ॥

**भा० पदार्थः**--वयोभिः=गुणकर्मस्वभावैः । आयुः=दीर्घायुः ।

**भाष्यसार**—**परमेश्वर के गुण तथा कर्म**—स्वप्रकाशस्वरूप परमेश्वर त्रिकाल में भी नाशरहित होने से अमृत है। सभी प्रकार की शक्तियों से पूर्ण होने से सुरेता है। वह दुःखरहित है अतः दुर्मर्ष कहलाता है। वह सूर्यादि का तथा वेद ज्ञान का निर्माण करके सबको दिखाने वाला है, सबको जीवन शक्ति देने वाला है। वह सभी गुणों से युक्त होने से पृथिव्यादि को सूक्ष्म प्रकृति से बनाने वाला है॥ १२। २५॥

वत्सप्रीः । **अग्निः**=विद्वान् । विराडार्षी त्रिष्टुप् । धैवतः॥

**पुनर्विद्वद्भिः कीदृशः पाचकः स्वीकार्य इत्याह॥**

फिर विद्वान् लोग कैसे रसोइया को स्वीकार करें, यह उपदेश किया है॥

**यस्ते॑ अ॒द्य कृ॒णव॑द्भद्रशोचेऽपू॒पं दे॑व घृ॒तव॑न्तमग्ने ।**
**प्र तं न॑य प्रत॒रं वस्यो॒ऽअच्छा॒भि सु॒म्नं दे॒वभ॑क्तं यविष्ठ ॥ २६ ॥**

**पदार्थः**—(यः) (ते) तव (**अद्य**) (**कृणवत्**) कुर्यात् (**भद्रशोचे**) भद्रा=भजनीया शोचिर्दीप्तिर्यस्य तत्सम्बुद्धौ (**अपूपम्**) (**देव**) दिव्यभोगप्रद (**घृतवन्तम्**) बहु घृतं विद्यते यस्मिन् तम् (**अग्ने**) विद्वन् (**प्र**)(**तम्**) (**नय**) प्राप्नुहि (**प्रतरम्**) पाकस्य संतारकम् (**वस्यः**) अतिशयितं वसु तत् (**अच्छ**) (**अभि**) (**सुम्नम्**) सुखस्वरूपम् (**देवभक्तम्**) देवैर्विद्वद्भिः सेवितम् (**यविष्ठ**) अतिशयेन युवन्॥ २६॥

**अन्वयः**—हे भद्रशोचे यविष्ठ देवाग्ने ! यस्ते तव घृतवन्तमभिसुम्नं वस्यो देवभक्तमपूपमच्छ कृणवत्तं प्रतरं पाककर्त्तारं त्वमद्य प्रणय॥ २६॥

**सपदार्थान्वयः**--हे **भद्रशोचे** भद्रा=भजनीया शोचिर्दीप्तिर्यस्य तत्सम्बुद्धौ ! **यविष्ठ** अतिशयेन युवन् ! **देव** दिव्यभोगप्रद ! **अग्ने** विद्वन् ! **यः ते**=तव **घृतवन्तं** बहु घृतं विद्यते यस्मिन् तम्, **अभि+सुम्नं** सुखस्वरूपं **वस्यः** अतिशयितं वसु तत्, **देवभक्तं** देवैर्विद्वद्भिः सेवितम् **अपूपम् अच्छ कृणवत्** कुर्यात् **तं प्रतरं**=**पाककर्त्तारं** पाकस्य सन्तारकं **त्वम् अद्य प्र+णय** प्राप्नुहि॥

**भाषार्थ**—हे (भद्रशोचे) उत्तम दीप्ति वाले (यविष्ठ) अत्यन्त युवक, (देव) दिव्य भोगों को प्रदाता, (अग्ने) विद्वान् ! जो (ते) आपके (घृतवन्तम्) बहुत घृतवाले, (अभि+सुम्नम्) सुखस्वरूप, (वस्यः) अत्यन्त सुगन्धित, (देवभक्तम्) विद्वानों से सेवित (अपूपम्) पूआ को (अच्छ) अच्छा (कृणवत्) बनावे उसे (प्रतरम्) पाचक को आप (अद्य) शीघ्र (प्र+णय) प्राप्त करो॥

[यः···देवभक्तमपूपमच्छ कृणवत्, तं प्रतरं=पाककर्त्तारं त्वमद्य प्रणय]

**भावार्थः**—मनुष्यैर्विद्वत्सुशिक्षितोऽत्युत्तमानां व्यञ्जनानां सुस्वादिष्ठानामन्नानां रुचिकराणां निर्माता पाककर्त्ता संग्राह्यः॥ १२। २६॥

**भावार्थ**—मनुष्य—विद्वानों द्वारा सुशिक्षित, अत्युत्तम व्यञ्जनों तथा अत्यन्त स्वादिष्ठ, रुचिकारक अन्नों के निर्माता को पाचक स्वीकार करें॥ १२। २६॥

**भाष्यसार**—**पाचक के योग्य गुण**—पाक शास्त्र में सुशिक्षित, दिव्य भोगों का प्रदाता और घृतादि पौष्टिक तथा सुगन्धित पदार्थों से युक्त भोजन के निर्माण में योग्य पाचक होना चाहिये। जो अपूपादि उत्तमोत्तम पदार्थों के निर्माण में दक्ष हो। और विद्वानों के प्रति श्रद्धाभाव भी रखता हो।

वत्सप्रीः । **अग्निः=विद्वान्** । विराडार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

विद्वान् लोग कैसे रसोई को स्वीकार करें, यह फिर उपदेश किया है ॥

**आ तं भज सौश्रवसेष्वग्न ऽ उक्थ ऽ उक्थ आभज शस्यमाने ।**
**प्रियः सूर्ये प्रियो ऽ अग्ना भवात्युज्जातेन भिनदद्दुज्जनित्वैः ॥ २७ ॥**

**पदार्थः**—(आ) (तम्) (भज) सेवस्व (सौश्रवसेषु) (अग्ने) विद्वन् (उक्थऽउक्थे) वक्तुं योग्ये योग्ये व्यवहारे (आ) (भज) (शस्यमाने) स्तूयमाने (प्रियः) कान्तः (सूर्य्ये) सूरिषु=स्तोतृषु भवे (प्रियः) सेवनीयः (अग्नाः) अग्नौ (भवाति) भवेत् (उत्) (जातेन) (भिनदत्) भिन्द्यात् (उत्) (जनित्वैः) जनिष्यमाणैः ॥ २७ ॥

**अन्वयः**—हे अग्ने विद्वन्! त्वं यः सौश्रवसेषु वर्त्तमानस्तमाभज यः शस्यमान उक्थऽउक्थे प्रियः सूर्येऽग्ना च प्रियो जातेन जनित्वैः सहोद्भवात्युद्भिनदत्तं त्वमाभज ॥ २७ ॥

**सपदार्थान्वयः**—हे **अग्ने=विद्वन्**! **त्वं यः सौश्रवसेषु वर्त्तमानस्तम् आ+भज** सेवस्व, **यः शस्यमाने** स्तूयमाने **उक्थऽउक्थे** वक्तुं योग्ये योग्ये व्यवहारे **प्रियः** सेवनीयः **सूर्य्ये** सूरिषु=स्तोतृषु भवे **अग्ना** अग्नौ **च प्रियः** कान्तः **जातेन जनित्वैः** जनिष्यमाणैः **सह उत्+भवाति** भवेत्, **उत्+भिनदत्** भिन्द्यात् **तं त्वम् आ+भज** सेवस्व ॥

**भाषार्थ**—हे (अग्ने) विद्वान्! आप जो (सौश्रवसेषु) श्रेष्ठ धनों में वर्तमान हो उसका (आ+भजस्व) सेवन करो, जो (शस्यमाने) स्तुति करने योग्य (उक्थऽउक्थे) वाग्-व्यवहार में (प्रियः) प्रिय हो, जो (सूर्ये) स्तोता-जनों में और (अग्ना) अग्नि-सम्बन्धी कार्यों में (प्रियः) कमनीय हो, जो (जातेन) उत्पन्न हुए और (जनित्वैः) उत्पन्न होने वाले पुरुषों के साथ (उत्+भवाति) रहने वाला हो, जो (उत्+भिनदत्) अन्न और व्यंजनों को भिन्न-भिन्न रखने वाला हो, उसका आप (आ+भज) सेवन करो ॥ १२ । २७ ॥

[ **हे अग्ने!=विद्वन्! त्वं यः सौश्रवेषु वर्तमानः···प्रियः···उद्भिनदत् तं त्वमाभज** ]

**भावार्थः**—मनुष्यैः पाककरणे साधुः, सर्वस्य प्रियः, अन्नव्यञ्जनानां भेदकः, पाचको भवेत् स स्वीकर्त्तव्यः ॥ ॥ १२ । २७ ॥

**भावार्थ**—मनुष्य पाक-कार्य में कुशल, सबका प्रिय, अन्न और व्यंजनों का भेदक, पाचक हो उसे स्वीकार करें ॥ १२ । २७ ॥

**भा० पदार्थः**—प्रियः=सर्वस्य प्रियः ।

**भाष्यसार**—**पाचक कैसा हो?**—जिसके मधुर वाग्व्यवहार से सब प्रसन्न हों । पाक-शास्त्र के जानने वालों में जिसकी प्रशंसा हो; पकाने की सभी क्रियाएँ जानता हो, और जो अन्न तथा व्यञ्जनों को पृथक्-पृथक् पकाना जानता हो, ऐसा पाचक होना चाहिये । पाचक श्रेष्ठ-धनों वाला भी हो क्योंकि धनाभाव से पीड़ित पाचक सदा दुःखप्रद होता है ॥ १२ । २७ ॥

वत्सप्रीः । **अग्निः**=विद्वान् ॥ विराडार्षी त्रिष्टुप् । धैवतः ॥

**पुनर्मनुष्यैर्विद्याः कथं वर्द्धनीया इत्याह ॥**

फिर मनुष्य लोग विद्या को किस प्रकार बढ़ावें, यह उपदेश किया है ॥

**त्वाम॑ग्ने यज॑माना ऽ अनु द्यून् विश्वा वसु॑ दधिरे॒ वार्या॑णि ।**
**त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः ॥ २८ ॥**

**पदार्थः**—(त्वाम्) (अग्ने) विद्वन् (यजमानाः) संगन्तारः (अनु) (द्यून्) दिनानि (विश्वा) सर्वाणि (वसु) वसूनि=द्रव्याणि (दधिरे) धरेयुः (वार्याणि) स्वीकर्त्तुमर्हाणि (त्वया) (सह) साकम् (द्रविणम्) धनम् (इच्छमानाः) व्यत्ययेनाऽऽत्मनेपदम् (व्रजम्) मेघम् (गोमन्तम्) प्रशस्ता गावः=किरणा यस्मिंस्तम् (उशिजः) मेधाविनः । उशिगिति मेधाविना० ॥ निघं० ३ । १५ ॥ (वि) (वव्रुः) वृणुयुः ॥ २८ ॥

**प्रमाणार्थ**—'उशिजः' यहाँ उशिज् शब्द निघण्टु (३ । १५) में मेधावी नामों में पढ़ा है। 'इच्छमानाः' यहां 'व्यत्ययो बहुलम्' सूत्र से आत्मनेपद हुआ है ।

**अन्वयः**—हे अग्ने विद्वन् ! यन्त्वामाश्रित्योशिजो यजमानास्त्वया सह याननुद्यून् विश्वा वार्याणि वसु दधिरे द्रविणमिच्छमाना गोमन्तं व्रजं विवव्रुस्तथाभूता वयमपि भवेम ॥ २८ ॥

**सपदार्थान्वयः**—हे **अग्ने**=विद्वन् ! **यन्त्वामाश्रित्य उशिजः** मेधाविनः **यजमानाः** संगन्तारः **त्वया सह** साकं **यान् अनु+द्यून्** दिनानि **विश्वा** सर्वाणि **वार्याणि** स्वीकर्त्तुमर्हाणि **वसु** वसूनि=द्रव्याणि **दधिरे** धरेयुः, **द्रविणं** धनम् **इच्छमानाः गोमन्तं** प्रशस्ता गावः=किरणा यस्मिँस्तम् **व्रजं** मेघं **वि+वव्रुः** वृणुयुः, **तथाभूता वयमपि भवेम** ॥ १२ । २८ ॥

**भाषार्थ**—हे (अग्ने) विद्वान् ! आपका आश्रय करके (उशिजः) मेधावी (यजमानाः) संगतिकारक लोग आपके (सह) साथ जिन (अनु+द्यून्) अनुकूल दिनों को, (विश्वा) सब (वार्याणि) स्वीकार करने योग्य (वसु) पदार्थों को (दधिरे) धारण करें, (द्रविणम्) धन की (इच्छमानाः) इच्छा करते हुए (गोमन्तम्) प्रशस्त किरणों वाले (व्रजम्) मेघ को (वि+वव्रुः) वरण करें, वैसे हम भी बनें ॥ १२ । २८ ॥

[हे अग्ने !=विद्वान् ! यं त्वामाश्रित्य...यजमाना...अनुद्यून्...वार्याणि वसु दधिरे]

**भावार्थः**—मनुष्यैः प्रयतमानानां विदुषां संगात् पुरुषार्थेन प्रतिदिनं विद्यासुखे वर्द्धनीये ॥

**भावार्थ**—मनुष्य—प्रयत्नशील विद्वानों के संग में पुरुषार्थ के द्वारा प्रतिदिन विद्या और सुख को बढ़ावें ॥ १२ । २८ ॥

**भाष्यसार**—**विद्या की वृद्धि के उपाय**—जब पढ़ने तथा पढ़ाने वाले दोनों ही मेधावी होते हैं। विद्वानों की सङ्गति करके उनको अनुकूल धनादि से सन्तुष्ट रखा जाता हो। विद्या के अधिकारी को विद्या सिखाई जाये, तब विद्या की सदा वृद्धि होती है। विद्वान् सदा गोमान अर्थात् इन्द्रिय को संयम करके सर्वत्र प्रकाशमान होना चाहिये ।

वत्सप्रीः । **अग्निः**=परमेश्वरः ॥ विराडार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तत्संगेन किं भवतीत्याह ॥**

फिर उन विद्वानों के संग से क्या होता है, यह उपदेश किया है ॥

अस्ताव्यग्निर्नराᳬ सुशेवो वैश्वानर ऽ ऋषिभिः सोमगोपाः ।
अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥ २९ ॥

**पदार्थः**—(**अस्तावि**) स्तूयते (**अग्निः**) परमेश्वरः (**नराम्**) नायकानां विदुषाम् (**सुशेवः**) सुष्ठुसुखः । शेवमिति सुखना० ॥ निघं० ३ । ६ ॥ (**वैश्वानरः**) विश्वे सर्वे नरा यस्मिन् स एव (**ऋषिभिः**) वेदवद्भिर्विद्वद्भिः (**सोमगोपाः**) ऐश्वर्यपालकाः (**अद्वेषे**) द्वेष्टुमनर्हे प्रीतिविषये (**द्यावापृथिवी**) राजनीतिभूराज्ये (**हुवेम**) स्वीकुर्याम (**देवाः**) शत्रून् विजिगीषमाणाः (**धत्त**) धरत (**रयिम्**) राज्यश्रियम् (**अस्मे**) अस्मभ्यम् (**सुवीरम्**) शोभना वीरा यस्मातम् ॥ २९ ॥

**प्रमाणार्थ**—'सुशेवः' यहाँ 'शेव' शब्द निघण्टु (३ । ६) में सुख वाचक नामों में पढ़ा है ।

**अन्वयः**—हे देवाः ! यैर्युष्माभिर्ऋषिभिर्यो नरां सुशेवो वैश्वानरोऽग्निरस्तावि वे यूयमस्मे सुवीरं धत्त तदाश्रिताः सोमगोपा वयमद्वेषे द्यावापृथिवी हुवेम ॥ २९ ॥

**सपदार्थान्वयः**—हे देवाः शत्रून् विजिगीषमाणाः ! **यैर्युष्माभिर्ऋषिभिः** वेदविद्भिर्विद्वद्भिः **यो नरां** नायकानां विदुषां **सुशेवः** सुष्ठुसुखो **वैश्वानरः** विश्वे सर्वे नरा यस्मिन् स एव **अग्निः** परमेश्वरो **अस्तावि** स्तूयते, **ये यूयम् अस्मे** अस्मभ्यं **सुवीरं** शोभना वीरा यस्मात् तम् [**रयिं**] राज्याश्रियम् **धत्त** धरत **तदाश्रिताः सोमगोपाः** ऐश्वर्य्यपालका **वयम् अद्वेषे** द्वेष्टुमनर्हे प्रीतिविषये **द्यावापृथिवी** राजनीतिभूराज्ये **हुवेम** स्वीकुर्याम ॥ १२ । २९ ॥

**भाषार्थ**—हे (देवाः) शत्रुओं को जीतने की इच्छा करने वाले, विद्वानो ! आप (ऋषिभिः) वेदज्ञ विद्वानों के द्वारा-जो (नराम्) नायक विद्वानों को (सुशेवः) उत्तम सुख देने वाला, (वैश्वानरः) जिस में सब नर=मनुष्य विद्यमान हैं उस (अग्निः) परमेश्वर की (अस्तावि) स्तुति की जाती है, आप (अस्मे) हमारे लिये (सुवीरम्) श्रेष्ठ वीरों के हेतु [रयिम्] राज्यलक्ष्मी को (धत्त) धारण करो, उसके आश्रित (सोमगोपाः) ऐश्वर्य के पालक हम लोग (अद्वेषे) द्वेष करने के अयोग्य, प्रीति विषयक (द्यावापृथिवी) राजनीति और भूमि के राज्य को (हुवेम) स्वीकार करें ॥ १२ । २९ ॥

[**हे देवाः ! यैर्युष्माभिर्ऋषिभिः ··· अग्निरस्तावि ··· वयमद्वेषे द्यावापृथिवी हुवेम**]

**भावार्थः**—ये सच्चिदानन्दस्वरूपेश्वर सेवका धार्मिका विद्वांसः सन्ति, ते परोपकारकत्वादाप्ता भवन्ति, नहीदृशानां संगमन्तरा सुस्थिरे विद्याराज्ये कर्त्तुं शक्नुवन्ति ॥ १२ । २९ ॥

**भावार्थ**—जो सच्चिदानन्द स्वरूप ईश्वर के सेवक धार्मिक विद्वान् हैं वे परोपकारी होने से आप्त होते हैं, ऐसे विद्वानों के संग के बिना विद्या और राज्य सुस्थिर नहीं कर सकते ॥ १२ । २९ ॥

**भा० पदार्थः**—ऋषिभिः=सच्चिदानन्दस्वरूपेश्वरसेवकैः धार्मिकैर्विद्वद्भिः, परोपकारकत्वादाप्तैः । अद्वेषे=सुस्थिरे । द्यावापृथिवी=विद्याराज्ये ॥

**भाष्यसार**—**विद्वानों की संगति से लाभ**—(१) जो सभी प्राणियों को सुख देने वाला परमेश्वर है उसकी ही उपासना करनी चाहिये, अन्य जड़ वस्तुओं की नहीं । (२) सोमगोपा-अर्थात् सभी प्रकार के ऐश्वर्यों की रक्षा होती है । (३) पारस्परिक द्वेषभाव दूर होकर प्रेमभाव बढ़ता है । (४) राजनीति तथा राज्य की लक्ष्मी के स्थिर होने से सर्वत्र शान्ति रहती है । (५) श्रेष्ठ-वीरों की वृद्धि होती है ॥

विरूपाक्षः । **अग्निः**=भौतिकः ॥ गायत्रीः । षड्जः ॥

**पुनर्मनुष्याणां के सेवनीयाः सन्तीत्याह ॥**

फिर मनुष्य किन का सेवन करें, यह उपदेश किया है ॥

**स॒मिधा॒ग्निं दु॑वस्यत घृ॒तैर्बो॑धय॒ताति॑थिम् । आस्मि॑न् ह॒व्या जु॑होतन ॥ ३० ॥**

**पदार्थः**—(**समिधा**) सम्यगग्निसंस्कृतेनान्नादिना (**अग्निम्**) उपदेशकं विद्वांसम् (**दुवस्यत**) सेवध्वम् (**घृतैः**) घृतादिभिः (**बोधयत**) चेतयत (**अतिथिम्**) अनियततिथिमुपदेशकम् (**आ**) (**अस्मिन्**) (**हव्या**) दातुमर्हाणि (**जुहोतन**) दत्त ॥ ३० ॥

**अन्वयः**—हे गृहस्थाः ! यूयं समिधाग्निमिवान्नादिनोपदेशकं दुवस्यत घृतैरतिथिं बोधयत । अस्मिन् हव्यां जुहोतन ॥ ३० ॥

**सपदार्थान्वयः**—हे गृहस्थाः ! यूयं **समिधा** सम्यगग्निसंस्कृतेनाऽन्नादिना **अग्निम्** इव उपदेशकं विद्वांसम् **इन्नादिनोपदशकं** दुवस्येत सेवध्वम् ।

**घृतैः** घृताऽऽदिभिः **अतिथिम्** अनियततिथिमुपदेशकं **बोधयत्** चेतयत ।

**अस्मिन् हव्या** दातुमर्हाणि [**आ**]+**जुहोतन** दत्त ॥ १२ । ३० ॥

**भाषार्थ**--हे गृहस्थो ! तुम—(समिधा) उत्तम रीति से अग्नि से संस्कृत अन्न आदि के द्वारा (अग्निम्) अग्नि के समान विद्वान् का (दुवस्यत) सेवन करो ।

(घृतैः) घृत आदि के द्वारा (अतिथिम्) अनिवत तिथि वाले उपदेशक को (बोधयत) सचेत करो ।

(अस्मिन्) इसमें (हव्यानि) देने योग्य पदार्थों का ([आ]+जुहोतन) दान करो ॥ १२ । ३० ॥

[हे गृहस्थाः ! यूयं समिधाऽग्निमिवान्नादिनोपदेशकं दुवस्यत]

**भावार्थः**—मनुष्यैः सत्पुरुषाणामेव सेवा कार्या, सत्पात्रेभ्य एव दानं च देयम् ।

**भावार्थ**--मनुष्य-सत्पुरुषों की ही सेवा करें और सत्पात्रों को ही दान दें ।

**[घृतैरतिथिं बोधयत, अस्मिन् हव्या जुहोतन]**

यथाऽग्नौ घृतादिकं हुत्वा संसारोपकारं जनयन्ति, तथैव विद्वत्सूत्तमानि दानानि संस्थाप्यैतैर्जगति विद्यासुशिक्षे वर्धनीये॥ १२ । ३० ॥

जैसे—अग्नि में घृत आदि का होम करके संसार का उपकार करते हैं वैसे ही विद्वानों में उत्तम दानों को संस्थापित करके इनसे जगत में विद्या और सुशिक्षा को बढ़ावें ॥ १२ । ३० ॥

**भाष्यसार**—**विद्वान् ही पूज्य है**—सभी मनुष्यों को योग्य है कि वे उत्तमोत्तम पदार्थों से तथा सभी प्रकार के धनों से विद्वानों का सत्कार करें । विद्वान् अतिथि वर्ग का सदा सत्कार करके विद्या और सुशिक्षा को बढ़ायें । ❁

तापसः । **अग्निः**=**विद्वान्** ॥ विराडनुष्टुप् । गान्धार ॥

**विद्वान् स्वतुल्यानन्यान् विदुषः कुर्यात् ।**

विद्वान् पुरुष को चाहिये कि अपने तुल्य अन्य मनुष्यों को विद्वान् करे, यह उपदेश किया है ॥

**उदु त्वा विश्वे देवाऽअग्ने भरन्तु चित्तिभिः। स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः ॥ ३१ ॥**

**पदार्थः**—(**उत्**) (उ) (**त्वा**) (**विश्वे**) सर्वे (**देवाः**) विद्वांसः (**अग्ने**) विद्वन् (**भरन्तु**) पुष्णन्तु (**चित्तिभिः**) सम्यग् विज्ञानैस्सह (**सः**) (**नः**) अस्मभ्यम् (**भव**) (**शिवः**) मङ्गलोपदेष्टा (**त्वम्**) (**सुप्रतीकः**) शोभनानि प्रतीकानि=लक्षणानि यस्य सः (**विभावसुः**) येन विविधा भा=विद्यादीप्तिर्वास्यते ॥ ३१ ॥

**अन्वयः**—हे अग्ने विद्वन् ! यं त्वा विश्वे देवाश्चित्तिभिरुदुभरन्तु स विभावसुः सुप्रतीकस्त्वं नः शिवो भव ॥ ३१ ॥

**सपदार्थान्वयः**—हे **अग्ने**=विद्वन् ! **यं त्वा विश्वे** सर्वे **देवाः** विद्वांसः **चित्तिभिः** सम्यग् विज्ञानैः सह **उद् उ भरन्तु** पुष्णन्तु, **सः विभावसुः** येन विविधा भा=विद्यादीप्तिवास्यते, **सुप्रतीकः** शोभनानि प्रतीकानि=लक्षणानि यस्य सः, **त्वं नः** अस्मभ्यं **शिवः** मङ्गलोपदेष्टा **भव** ॥ १२ । ३१ ॥

**भाषार्थ**—हे (अग्ने) विद्वान् ! (त्वा) आपको (विश्वे) सब (देवाः) विद्वान् पुरुष (चित्तिभिः) विज्ञानों से (उद्+उ+भरन्तु) उत्तम रीति से विचारपूर्वक पुष्ट करें। सो (विभावसुः) विविध विद्याप्रकाश से युक्त, (सुप्रतीकः) सुन्दर लक्षणों वाले आप (नः) हमारे लिए (शिवः) मङ्गल-उपदेशक (भव) बनो ॥ १२ । ३१ ॥

[हे **अग्ने**=विद्वन् ! **यं त्वा**···**देवाश्चित्तिभिरुदुभरन्तु स**···**त्वं नः शिवो भव**]

**भावार्थः**—यो यथा विद्वद्भ्यो विद्यां संचिनोति, तथैवान्यान् विद्यासंचितान् संपादयेत् ॥

**भावार्थ**—जो व्यक्ति जैसे विद्वानों से विद्या का संचय करता है वैसे वह अन्यों को भी विद्या-युक्त बनावे ॥ १२ । ३१ ॥

**भा० पदार्थः**—चित्तिभिः=विद्या संचयैः ।

**भाष्यसार**—**विद्वान् का कर्त्तव्य**—जैसे अग्नि का प्रकाश दूर तक फैल जाता है वैसे ही विद्वान् की विद्या से सब मनुष्य प्रकाशित होने चाहियें। विद्या की शोभा इसी में है कि उसका सदा दूसरों को दान देकर मनुष्य मात्र का मङ्गल किया जाये। विद्वान् सुप्रतीक अर्थात् सभी शुभ लक्षणों से युक्त होना चाहिये। ❀

तापसः। **अग्निः**=**राजा** ॥ विराडनुष्टुप्। गान्धारः ॥

**पुना राजा किं कृत्वा किं प्राप्नुयादित्याह ॥**

फिर राजा क्या करके किसको प्राप्त होवे, यह उपदेश किया है ॥

**प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिष्ट्वम्। बृहद्भिर्भानुभिर्भासन् मा हिंꣳसीस्तन्वा प्रजाः ॥३२॥**

**पदार्थः**—(**प्र**) (**इत्**) (**अग्ने**) विद्याप्रकाशक (**ज्योतिष्मान्**) बहूनि ज्योतींषि=विज्ञानानि विद्यन्ते यस्य सः (**याहि**) प्राप्नुहि (**शिवेभिः**) मङ्गलकारकैः (**अर्चिभिः**) पूजितैः (**त्वम्**) (**बृहद्भिः**) महद्भिः (**भानुभिः**) विद्याप्रकाशकैर्गुणैः (**भासन्**) प्रकाशकः सन् (**मा**) (**हिंसीः**) हिंस्याः (**तन्वा**) शरीरेण (**प्रजाः**) पालनीयाः ॥ ३२ ॥

**अन्वयः**—हे अग्ने विद्वन् ! त्वं यथा ज्योतिष्मान् सूर्य्यः शिवेभिरर्चिभिर्बृहद्भिर्भानुभिरिदेव भासन्वर्त्तते तथा प्रयाहि तन्वा प्रजा माहिंसीः ॥ ३२ ॥

**सपदार्थान्वयः**—हे अग्ने=विद्वन् विद्याप्रकाशक ! **त्वं यथा ज्योतिष्मान्=सूर्य्यः** बहूनि ज्योतींषि=विज्ञानानि विद्यन्ते यस्य सः, **शिवेभिः** मङ्गलकारकैः **अर्चिभिः** पूजितैः **बृहद्भिः** महद्भिः **भानुभिः** विद्याप्रकाशकैर्गुणैः **इत्=एव भासन्** प्रकाशकः सन् **वर्त्तते** तथा **प्र+याहि** प्राप्नुहि, **तन्वा** शरीरेण **प्रजाः** पालनीयाः **मा हिंसीः** हिंस्याः ॥ १२ । ३२ ॥

**भाषार्थ**—हे (अग्ने) विद्याप्रकाशक विद्वान् राजन् आप—जैसे, (ज्योतिष्मान्) नाना ज्योतिरूप । विज्ञान वाला विद्वान् रूप सूर्य (शिवेभिः) मङ्गलकारक (अर्चिभिः) पूजित (बृहद्भिः) महान् (भानुभिः) विद्या-प्रकाशक गुणों से (इत्) ही (भासन्) प्रकाश करने वाला है, वैसे आप हमें (प्र+याहि) प्राप्त होओ । तन्वा शरीर से (प्रजाः) पालनीय प्रजा का (मा हिंसीः) हिंसन मत करो ॥ १२ । ३२ ॥

[ हे अग्ने ! =विद्वन् त्वं ... तन्वा प्रजामा हिंसीः ]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः ॥ हे सराजपुरुष राजन् ! त्वं शरीरेणानपराधिनः कस्यापि प्राणिनो हिंसामकृत्वा,

**भावार्थ**—इस मन्त्र में वाचक-लुप्तोपमा अलङ्कार है ॥ हे राजपुरुषों से युक्त राजन् ! आप शरीर से किसी भी निर्दोष प्राणी की हिंसा न करके,

[ भानुभिः ]

विद्यान्यायप्रकाशेन प्रजाः पालयन्, जीवन्नभ्युदयं, मृत्वा मुक्तिसुखं प्राप्नुयाः ॥ १२ । ३२ ॥

विद्या और न्याय के प्रकाश से प्रजा का पालन करते हुए, जीते हुए अभ्युदय को, प्राण-त्याग करके मुक्ति सुख को प्राप्त करो ॥ १२ । ३२ ॥

**भा० पदार्थः**—अग्ने !=रे सराजपुरुष राजन् ! भानुभिः=विद्यान्यायप्रकाशैः ।

**भाष्यसार**—१. **राजा के कर्त्तव्य**—राजा स्वयं सुशिक्षित होकर विद्या की वृद्धि के लिए सदा यत्न करे । राजा के प्रजा-हित के कार्यों का उद्देश्य महान् तथा कल्याणकारी होना चाहिये । और ऐसे कार्य की सब लोग प्रशंसा करने वाले हों । राजा कभी भी प्रजा-पालन रूप कर्त्तव्य का कभी हिंसन न करे अर्थात् प्रजा के कार्यों में कभी भी प्रमाद न करे ।

२. **अलङ्कार**—इस मन्त्र में इव पद के लुप्त होने से वाचकलुप्तोपमालङ्कार है । उपमा यह है कि जैसे विद्वान् रूप सूर्य मंगलकारक महान् गुणों से सबको प्रकाशित करता है, उसी प्रकार राजा को भी सद्विद्या का प्रकाश करना चाहिये ।

वत्सप्रीः । **अग्निः=शत्रुदाहको विद्वान्** ॥ निचृदार्षी त्रिष्टुप् । धैवतः ॥

**राज्यप्रबन्धः कथं कार्य्य इत्युपदिश्यते ॥**

राज्य का प्रबन्ध कैसे करे, यह उपदेश किया है ॥

**अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद् वीरुधः समञ्जन् ।**
**सद्यो जज्ञानो वि हीमिद्धो ऽ अख्यदा रोदसी भानुना भात्यन्तः ॥ ३३ ॥**

**पदार्थः**—(**अक्रन्दत्**) विजानाति (**अग्निः**) शत्रुदाहको विद्वान् (**स्तनयन्निव**) विद्युद्वद्गर्जयन् (**द्यौः**) विद्यान्यायप्रकाशकः (**क्षामा**) भूमिम् (**रेरिहत्**) भृशं युध्यस्व (**वीरुधः**) वनस्थान् वृक्षान् (**समञ्जन्**)

सम्यक् रक्षन् (सद्यः) तूर्णम् (जज्ञानः) राजनीत्या प्रादुर्भूतः (वि) (हि) खलु (ईम्) सर्वतः (इद्धः) शुभ-लक्षणैः प्रकाशितः (अख्यत्) धर्म्यानुपदेशान् प्रकथयः (आ) (रोदसी) अग्निभूमी (भानुना) पुरुषार्थप्रकाशेन (भाति) (अन्तः) राजधर्म्ममध्ये स्थितः ।। ३३ ।।

**अन्वयः**—हे प्रजाजनाः ! युष्माभिर्यथा द्यौरग्निः स्तनयन्निवाक्रन्दद्वीरुधः समञ्जन् क्षामा रेरिहत् जज्ञान इद्धः सद्यो व्यख्यत् भानुना हि रोदसी अन्तराभाति तथा स राजा भवितुं योग्योऽस्तीति वेद्यम् ।। ३३ ।।

**सपदार्थान्वयः**—हे **प्रजाजनाः** ! **युष्माभिर्यथा द्यौः** विद्यान्यायप्रकाशकः **अग्निः** शत्रुदाहको विद्वान् **स्तनयन्निव** विद्युद्वद्गर्जयन् **अक्रन्दत्** विजानाति, **वीरुधः** वनस्थान् वृक्षान् **समञ्जन्** सम्यग् रक्षन् **क्षामा** भूमिं **रेरिहत्** भृशं युध्यति, **जज्ञानः** राजनीत्या प्रादुर्भूतः **इद्धः** शुभ लक्षणैः प्रकाशितः **सद्यः** तूर्णं **वि+अख्यत्** धर्म्यानुपदेशान् प्रकथयति, **भानुना** पुरुषार्थप्रकाशेन **हि** खलु **रोदसी** अग्निभूमी **अन्तः** राजधर्म्ममध्ये स्थितः **आ+भाति**, तथा स **राजा भवितुं योग्योऽस्तीति वेद्यम्** ।। १२ । ३३ ।।

**भाषार्थ**—हे प्रजा-जनो ! तुम्हें—जैसे (द्यौः) विद्या और न्याय का प्रकाशक (अग्निः) शत्रुओं का दाहक विद्वान् (स्तनयन्निव) विद्युत् के समान गर्जता हुआ (अक्रन्दत्) विज्ञान को प्राप्त होता है, (वीरुधः) वनस्थ वृक्षों की (समञ्जन्) सुरक्षा करता हुआ (क्षामा) भूमि पर (रेरिहत्) बहुत युद्ध करता है, (जज्ञानः) राजनीति से प्रसिद्ध, (इद्धः) शुभ लक्षणों से प्रकाशित, (सद्यः) शीघ्र (वि+अख्यत्) धर्मयुक्त उपदेश करता है, (भानुना) पुरुषार्थ के प्रकाश से (हि) निश्चय से (रोदसी) द्युलोक और भूलोक को (अन्तः) राज-धर्म में स्थित होकर (आ+भाति) प्रकाशित होता है, वैसे—वह राजा होने योग्य है, ऐसा जानो ।।

[वीरुधः समञ्जन्, अग्निः स्तनयन्निवाक्रन्दत्, द्यौः]

**भावार्थः**—अत्रोपमावाचकलुप्तोपमालङ्कारौ । न हि वनवृक्षरक्षणेन विना वृष्टिबाहुल्यम्, आरोग्यं, तडिद्व्यवहारवद् दूरसमाचारग्रहणेन शत्रुविनाशनेन राज्ये विद्यान्यायप्रकाशेन च विना सुराज्यं च जायते ।। १२ । ३३ ।।

**भावार्थ**—इस मन्त्र में वाचक-लुप्तोपमा और उपमा अलङ्कार हैं ।। वन के वृक्षों की रक्षा के विना वर्षा की अधिकता और आरोग्य नहीं होता । विद्युत्-व्यवहार के समान दूर के समाचारों का ग्रहण, शत्रुओं के विनाश, राज्य में विद्या और न्याय के प्रकाश के विना सुराज्य नहीं होता ।।

**भा० पदार्थः**—वीरुधः=वनवृक्षाः । स्तनयन्निव=तडिद्व्यवहारवत् ।

**भाष्यसार**—**१. राजा के योग्य गुणों का वर्णन**—राजा वही सुशासन कर सकता है जो विद्युत् की तरह गर्जता हुआ अपने शत्रुओं को जीत लेता है । राज्य में अराजकता को समाप्त करने के लिये विद्या तथा न्याय का प्रकाशक हो, राजनीति में दृढ़ता से ख्याति प्राप्त करे । सभी शुभ गुणों के कारण प्रजा का प्रिय हो । अपने पुरुषार्थ से सदा धर्मयुक्त कार्यों में सदा उत्साह दिखाने वाला हो । राजा का परम धर्म है कि वह वन की सम्पत्ति वृक्षादि की सदा रक्षा तथा वृद्धि करता रहे ।

**२. अलङ्कार**—इस मन्त्र में वाचकलुप्तोपमालङ्कार तथा उपमालङ्कार हैं । उपमा यह है कि जैसे विद्युत् गर्जता हुआ मेघादि को छिन्न-भिन्न कर देता है वैसे ही राजा भी शत्रुओं का विनाश करने वाला होना चाहिये ।

वसिष्ठः । **अग्निः**=सेनेशः ॥ आर्षीत्रिष्टुप् । धैवतः ॥

**पुनः कीदृशं जनं राजव्यवहारे नियुञ्जीरन्नित्याह ॥**

फिर कैसे पुरुष को राजव्यवहार में नियुक्त करें, यह उपदेश किया है ॥

**प्रप्रायमग्निर्भरतस्यं शृण्वे वि यत्सूर्यो न रोचंते बृहद्भाः ।**
**अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो ऽ अतिथिः शिवो नः ॥ ३४ ॥**

**पदार्थः**—(**प्रप्र**) अतिप्रकर्षेण (**अयम्**) (**अग्निः**) सेनेशः (**भरतस्य**) पालितव्यस्य राज्यस्य (**शृण्वे**) (**वि**) (**यत्**) यः (**सूर्य्यः**) सविता (**न**) इव (**रोचते**) प्रकाशते (**बृहद्भाः**) महाप्रकाशः (**अभि**) (**यः**) (**पूरुम्**) पूर्णबलं सेनाध्यक्षम् । **पूरव इति मनुष्यना० ॥ निघं० २ । ३ ॥** (**पृतनासु**) सेनासु (**तस्थौ**) तिष्ठेत् (**दीदाय**) धर्मं प्रकाशयेत् (**दैव्यः**) देवेषु=विद्वत्सु प्रीतः (**अतिथिः**) नित्यं भ्रमणकर्त्ता विद्वान् (शिवः) मङ्गलप्रदः (**नः**) अस्मान् ॥ ३४ ॥

**प्रमाणार्थ**—'पूरुम्' इसमें पूरु शब्द मनुष्य वाची है। निघण्टु में (२ । ३) 'पूरव' यह शब्द मनुष्य के नामों में पढ़ा है ।

**अन्वयः**—हे राजप्रजाजनाः ! यूयं यद्योऽयमग्निः सूर्यो न बृहद्भाः प्रप्ररोचते। यो नः पृतनासु पूरुमभि तस्थौ दैव्योऽतिथिः शिवो विद्या दीदाय। यत्ते विजयो विद्या च श्रूयेत स लब्धलक्षः कुलीनः सेनाया योधयिताऽधिकर्त्तव्यः ॥ ३४ ॥

**सपदार्थान्वयः**—**हे राजप्रजाजनाः ! यूयं यद्**=**योऽयमग्निः** सेनेशः **सूर्य्यः** सविता **न** इव **बृहद्भाः** महाप्रकाशः **प्रप्र**+**रोचते** अतिप्रकर्षेण प्रकाशते; **यो नः** अस्मान् **पृतनासु** सेनासु **पूरुं** पूर्णबलं सेनाऽध्यक्षम् **अभि**+**तस्थौ** तिष्ठेत्, **दैव्यः** देवेषु=विद्वत्सु प्रीतः **अतिथिः** नित्यं भ्रमणकर्त्ता विद्वान् **शिवः** मङ्गलप्रदः **विद्या दीदाय** धर्मं प्रकाशयेत् **यत्** यः ते [**भरतस्य**] पालितव्यस्य राज्यस्य **वि**+**शृण्वे**=**विजयो विद्या च श्रूयेत, स लब्ध लक्षः कुलीनः सेनाया योधयिताऽधिकर्त्तव्यः** ॥

**भाषार्थ**—हे राजा और प्रजा के पुरुषो ! तुम—(यद्) जो यह (अग्निः) सेनापति (सूर्यः) सूर्य के (न) समान (बृहद्भाः) महान् प्रकाश वाला (प्र प्र+रोचते) अत्यन्त प्रकाशित है, जो (नः) हमारी (पृतनासु) सेनाओं में (पूरुम्) पूर्ण बल वाले सेनाध्यक्ष को (अभि+तस्थौ) स्थिर करे, (दैव्यः) विद्वानों में प्रिय, (अतिथिः) नित्य भ्रमण करने वाला विद्वान् (शिवः) मङ्गलकारी विद्या एवं धर्म को (दीदाय) प्रकाशित करे; (यत्) जो आपके [भरतस्य] पालनीय राज्य की (वि+शृण्वे) विद्या और विजय को प्रसिद्ध करे वह लक्ष्य को प्राप्त करने वाला, कुलीन पुरुष सेना का युद्ध कराने वाला अधिकारी हो ॥ १२ । ३४ ॥

[यत् ते [भरतस्य वि+शृण्वे] स···**कुलीनः सेनाया योधयिताऽधिकर्त्तव्यः**]

**भावार्थः**—अत्रोपमालङ्कारः ॥ यस्य पुण्यकीर्त्तेः पुरुषस्य शत्रुषु विजयो विद्याप्रचारश्च श्रूयते, स कुलीनः सेनाया योधयिताऽधिकर्त्तव्यः ॥

**भावार्थ**—इस मन्त्र में उपमा अलङ्कार है ॥ जिस पुण्य कीर्त्तिवाले पुरुष का शत्रुओं पर विजय और विद्याप्रचार प्रसिद्ध होवे उस कुलीन पुरुष को सेना का युद्ध कराने वाला अधिकारी बनावें ॥ १२ । ३४ ॥

[ये'''हैमन्तिकावृतू अभिकल्पमाना देवा अभिसंविशन्तु ते तया देवतया सह'''सुखिनः स्युः]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः ॥ हे मनुष्याः ! यथा विद्वांसः स्वसुखाय हेमन्ततौं पदार्थान् सेवेरन्, तथैवान्यानपि सेवयेयुः ॥१४।२७॥

**भावार्थ**—इस मन्त्र में वाचक-लुप्तोपमा अलंकार है ॥ हे मनुष्यो ! जैसे विद्वान् लोग अपने सुख के लिए हेमन्त-ऋतु में पदार्थों का सेवन करें वैसे ही दूसरों को भी सेवन करावें ॥ १४ । २७ ॥

**भाष्यसार**—१. **हेमन्त-ऋतु और उसमें कर्त्तव्योपदेश**—हेमन्त-ऋतु मार्गशीर्ष और पौष मासों में होती है। ये दोनों मास स्वास्थ्यप्रद होने से बलवृद्धि करने वाले हैं। इस ऋतु में स्वस्थ मनुष्य पूरे वर्ष भर स्वस्थ रहता है। इस ऋतु में शीत-प्रधान होने से व्यायाम प्राणायामादि से बलवृद्धि करके सूर्य की तरह तेजस्वी तथा नियमित रहना चाहिए। इस ऋतु में अग्नि गुण को प्राप्त कराने वाली ओषधियों, जल और आवास स्थानों का सेवन करना चाहिये। इस ऋतु में युक्ताहार-विहार करने वाला दिव्य-शक्तियों को प्राप्त करके और इन्द्र की तरह परमैश्वर्यशाली बनकर सुखी रहता है।

२. **अलङ्कार**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है। विद्वानों की तरह दूसरे मनुष्यों को भी सुख प्राप्ति के लिए हेमन्त-ऋतु का सेवन करना चाहिये ॥ १४ । २७ ॥

विश्वदेवः । **ईश्वरः**=**स्पष्टम्** । निचृद्विकृतिः । मध्यमः ॥

**अथैतदृतुचक्रं केन सृष्टमित्याह ॥**

अब यह ऋतुओं का चक्र किसने रचा है, इस विषय का उपदेश किया जाता है ॥

**एकयास्तुवत प्रजा ऽ अधीयन्त प्रजापतिरधिपतिरासीत् ।**
**तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् ।**
**पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत् ।**
**सप्तभिरस्तुवत सप्त ऋषयोऽसृज्यन्त धाताधिपतिरासीत् ॥ २८ ॥**

**पदार्थः**—(**एकया**) वाण्या (**अस्तुवत**) स्तुवन्तु (**प्रजाः**) (**अधीयन्त**) अधीयताम् (**प्रजापतिः**) प्रजायाः पालक ईश्वरः (**अधिपतिः**) (**आसीत्**) अस्ति (**तिसृभिः**) प्राणोदानव्यानगतिभिः (**अस्तुवत**) स्तुवन्तु (**ब्रह्म**) परमेश्वरेण वेदः (**असृज्यत**) सृष्टः (**ब्रह्मणस्पतिः**) वेदस्य पालकः (**अधिपतिः**) (**आसीत्**) अस्ति (**पञ्चभिः**) समानचित्तबुद्ध्यहंकारमनोभिः (**अस्तुवत**) स्तुवन्तु (**भूतानि**) पृथिव्यादीनि (**असृज्यन्त**) संसृष्टानि (**भूतानाम्**) (**पतिः**) पालकः (**अधिपतिः**) पत्युः पतिः (**आसीत्**) भवति (**सप्तभिः**) नागकूर्म्मकृकलदेवदत्तधनंजयेच्छाप्रयत्नैः (**अस्तुवत**) स्तुवन्तु (**सप्त ऋषयः**) पंच मुख्यप्राणा महत्तत्त्वमहंकारश्चेति (**असृज्यन्त**) सृज्यन्ते (**धाता**) धर्त्ता पोषको वा (**अधिपतिः**) सर्वेषां स्वामी (**आसीत्**) अस्ति ॥ २८ ॥

**अन्वयः**—हे मनुष्याः ! यः प्रजापतिरधिपतिः सर्वस्य स्वामीश्वर आसीत्तमेकयाऽस्तुवत सर्वाः प्रजाश्चाधीयन्त । यो ब्रह्मणस्पतिरधिपतिरासीद्येनेदं सर्वविद्यामयं ब्रह्म वेदोऽसृज्यत तं तिसृभिरस्तुवत । येन भूतान्यसृज्यन्त यो भूतानां पतिरधिपतिरासीत्तं सर्वे मनुष्याः । पंचभिरस्तुवत येन सप्त ऋषयोऽसृज्यन्त यो धाताऽधिपतिरासीत्तं सप्तभिरस्तुवत ॥ २८ ॥

**सपदार्थान्वयः**—हे **मनुष्याः** ! **यः** **प्रजापतिः** प्रजायाः पालक ईश्वरः **अधिपतिः**=

**भाषार्थ**—हे मनुष्यो ! जो (प्रजापतिः) प्रजा का पालक ईश्वर (अधिपतिः) सबका स्वामी

**सर्वस्य स्वामीश्वर आसीत्** अस्ति, **तमेकया** वाण्या **अस्तुवत** स्तुवन्तु, **सर्वाः प्रजाश्चाऽधीयन्त** अधीयताम् ।

ईश्वर (आसीत्) है उसकी (एकया) वाणी से (अस्तुवत) स्तुति करो और सब (प्रजाः) प्रजा (अधीयन्त) उसको स्मरण करे ।

**यो ब्रह्मणस्पतिः** वेदस्य पालकः **अधिपतिः**=**सर्वस्य स्वामीश्वर आसीत्** अस्ति, **येनेदं सर्वविद्यामयं ब्रह्म**=**वेदः** परमेश्वरेण वेदः **असृज्यत** सृष्टः, **तं तिसृभिः** प्राणोदानव्यानगतिभिः **अस्तुवत** स्तुवन्तु ।

जो (ब्रह्मणस्पतिः) वेद का पालक (अधिपतिः) सबका स्वामी ईश्वर (आसीत्) है, जिसने यह सर्व विद्यामय (ब्रह्म) वेद (असृज्यत) रचा है, उसकी (तिसृभिः) तीन प्राण, उदान और व्यान गति से (अस्तुवत) स्तुति करो ।

**येन भूतानि** पृथिव्यादीनि **असृज्यन्त** संसृष्टानि **यो भूतानां** पृथिव्यादीनां **पतिः** पालकः **अधिपतिः** पत्युः पतिः **आसीत्** भवति **तं सर्वे मनुष्याः पञ्चभिः** समानचित्तबुद्ध्यहंकारमनोभिः **अस्तुवत** स्तुवन्तु ।

जिसने (भूतानि) पृथिवी आदि पाँच भूतों को (असृज्यन्त) रचा है, जो (भूतानाम्) पृथिवी आदि पाँच भूतों का (पतिः) पालक, (अधिपतिः) रक्षक का भी रक्षक (आसीत्) है, उसे सब मनुष्य (पञ्चभिः) समान, चित, बुद्धि, अहंकार और मन इन पाँचों से (अस्तुवत) स्तुति करो ।

**येन सप्तऽऋषयः** पञ्च मुख्यप्राणा महत्तत्त्वमहङ्कारश्चेति **असृज्यन्त** सृज्यन्ते, **यो धाता** धर्त्ता पोषको वा **अधिपतिः** सर्वेषां स्वामी **आसीत्** अस्ति, **तं सप्तभिः** नागकूर्मकृकलदेवदत्तधनञ्जयेच्छाप्रयत्नैः **अस्तुवत** स्तुवन्तु ॥ १४ । २८ ॥

जिसने (सप्तऽऋषयः) पाँच मुख्य प्राण, महत्तत्त्व और अहंकार ये सप्त ऋषि (असृज्यन्त) रचे हैं, जो (धाता) धारक वा पोषक (अधिपतिः) सबका स्वामी (आसीत्) है, उसकी (सप्तभिः) नाग, कूर्म, कृकल, देवदत्त, धनंजय, इच्छा और प्रयत्न इन सातों से (अस्तुवत) स्तुति करो ॥

[हे मनुष्याः ! **यः प्रजापतिरधिपतिः**=**सर्वस्य स्वामीश्वर आसीत्, तमेकयाऽस्तुवत**]

**भावार्थः**—सर्वैर्मनुष्यैः सर्वस्य जगत उत्पादको न्यायाधीशः, परमेश्वरः स्तोतव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।

**भावार्थ**—सब मनुष्य-सब जगत् के उत्पादक, न्यायाधीश परमेश्वर की स्तुति करें, उसी का श्रवण, मनन और निदिध्यासन करें ।

**[तात्पर्यमाह—]**

यथा हेमन्ततौ सर्वे पदार्थाः शीतला भवन्ति, तथैव परमेश्वरमुपास्य शान्तियुक्ता भवन्तु ॥

जैसे—हेमन्त ऋतु में सब पदार्थ शीतल होते हैं वैसे ही परमेश्वर की उपासना करके सब शान्तियुक्त होवे ॥ १४ । २८ ॥

**भाष्यसार—ऋतुओं के स्रष्टा सूर्यादि का निर्माता ईश्वर ही है**—परमेश्वर सब प्रजा का पालन करने से प्रजापति कहलाता है । वेद-ज्ञान का दाता होने से उसका नाम ब्रह्मणस्पति है । उस की वाणी से, प्राण, उदान, व्यान रूप प्राणों की गति स्तुति करनी चाहिए, अर्थात् हमारी एक-एक चेष्टा ईश्वर को स्मरण करते हुए ही होवे, जिससे पाप से अपनी रक्षा कर सकें । उस ईश्वर ने ही पृथिवी आदि पाँच महाभूतों को सूक्ष्म से स्थूल रूप में रचा है । अतः उसकी उपासना समान, चित, बुद्धि, अहङ्कार और मन से करनी चाहिए । उस परमेश्वर ने ही सब मनुष्यों के शरीरों को सात ऋषियों अर्थात् पाँच प्राण, महत्तत्त्व और अहङ्कार से युक्त किया है । वह ही इन शरीरादि भौतिक पदार्थों का धारक,

पोषक तथा स्वामी है, उसकी उपासना नाग, कूर्म, कृकल, देवदत्त, धनञ्जय, इच्छा और प्रयत्न से करनी चाहिए। तब ही सुख तथा शान्ति की प्राप्ति हो सकती है ॥ १४ । २८ ॥

विश्वदेवः । **ईश्वरः**=**स्पष्टम्** । पूर्वस्यार्षी त्रिष्टुप् । धैवतः । त्रयोदशभिरित्युत्तरस्य ब्राह्मी जगती छन्दः । निषादः स्वरः ॥

**पुनः स जगत्स्रष्टा किंभूत इत्याह ॥**

फिर वह जगत् का रचने वाला कैसा है, इस विषय का उपदेश किया है ॥

नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीत् ।
एकादशभिरस्तुवतऽऋतवोऽसृज्यन्तार्त्तवा ऽ अधिपतय ऽ आसन् ।
त्रयोदशभिरस्तुवत मासा ऽ असृज्यन्त संवत्सरोऽधिपतिरासीत् ।
पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् ।
सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीत् ॥ २९ ॥

**पदार्थः**—(**नवभिः**) प्राणविशेषैः (**अस्तुवत**) प्रशंसन्तु (**पितरः**) पालका वर्षादयः (**असृज्यन्त**) उत्पादिताः (**अदितिः**) मातेव पालिका भूमिः (**अधिपत्नी**) अधिपतिसहिता (**आसीत्**) अस्ति (**एकादशभिः**) दश प्राणा एकादश आत्मा तैः (**अस्तुवत**) स्तुवन्तु (**ऋतवः**) वसन्तादयः (**असृज्यन्त**) सृष्टाः (**आर्त्तवाः**) ऋतुषु भवा गुणाः (**अधिपतयः**) (**आसन्**) भवन्ति (**त्रयोदशभिः**) दश प्राणा द्वे प्रतिष्ठे त्रयोदश आत्मा तैः (**अस्तुवत**) स्तुवन्तु (**मासाः**) चैत्राद्याः (**असृज्यन्त**) सृष्टाः (**संवत्सरः**) (**अधिपतिः**) अधिष्ठाता (**आसीत्**) अस्ति (**पञ्चदशभिः**) प्रतिपदादितिथिभिः (**अस्तुवत**) स्तुवन्तु संख्यायन्तु (**क्षत्रम्**) राज्यं क्षत्रियकुलं वा (**असृज्यत**) सृष्टम् (**इन्द्रः**) परमैश्वर्य्यहेतुः सूर्य्यः (**अधिपतिः**) अधिष्ठाता (**आसीत्**) (**सप्तदशभिः**) दश पाद्या अङ्गुलयश्चत्वार्य्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदर्वाङ् नाभेस्तत्सप्तदशं तैः (**अस्तुवत**) स्तुवन्तु (**ग्राम्याः**) ग्रामे भवाः (**पशवः**) गवादयः (**असृज्यन्त**) (**बृहस्पतिः**) बृहतां पालको वैश्यः (**अधिपतिः**) अधिष्ठाता (**आसीत्**) अस्ति ॥ २९ ॥

**अन्वयः**—हे मनुष्याः! यूयं येन पितरोऽसृज्यन्त यत्राधिपत्न्यदितिरासीत्तं यूयं नवभिरस्तुवत येनर्त्तवोऽसृज्यन्त यत्रार्त्तवा अधिपतय आसंस्तमेकादशभिरस्तुवत येन मासा असृज्यन्त पञ्चदशभिः संवत्सरोऽधिपतिः सृष्ट आसीत् त्रयोदशभिरस्तुवत । यत्रेन्द्रोऽधिपतिरासीद्येन नक्षत्रमसृज्यत तं सप्तदशभिरस्तुवत । येन बृहस्पतिरधिपतिः सृष्ट आसीद् ग्राम्याः पशवोऽसृज्यन्त तं परमेश्वरं सप्तदशभिरस्तुवत ॥ २९ ॥

**सपदार्थान्वयः**—हे **मनुष्याः** ! **यूयं येन पितरः** पालका वर्षादयः **असृज्यन्त** उत्पादिताः, **यत्राधिपत्नी** अधिपतिसहिता **अदितिः** मातेव पालिका भूमिः **आसीत्** अस्ति, **तं नवभिः** प्राणविशेषैः **अस्तुवत** प्रशंसन्तु ।

**येनर्त्तवः** वसन्तादयः **असृज्यन्त** सृष्टाः **यत्रा-**

**भावार्थ**—हे मनुष्यो ! तुम—जिसने (पितरः) पालक वर्ष आदि पितरों को (असृज्यन्त) उत्पन्न किया है, जिसमें—(अधिपत्नी) अधिपति सहित (अदितिः) माता के समान पालक भूमि (आसीत्) है, उसकी (नवभिः) नौ प्राण-विशेषों से (अस्तुवत) प्रशंसा करो ।

जिससे (ऋतवः) वसन्त आदि ऋतु (असृ-

**र्त्तवाः** ऋतुषु भवा गुणाः **अधिपतय आसन्** भवन्ति, **तमेकादशभिः** दश प्राणा एकादश आत्मा तैः **अस्तुवत** स्तुवन्तु ।

**येन मासाः** चैत्राद्याः **असृज्यन्त** सृष्टाः, **पञ्चदशभिः** प्रतिपदादितिथिभिः **संवत्सरोऽधिपतिः** अधिष्ठाता **सृष्ट आसीत्** अस्ति, **तं त्रयोदशभिः** दश प्राणा द्वे प्रतिष्ठे त्रयोदश आत्मा तैः **अस्तुवत** स्तुवन्तु संख्यायन्तु ।

**यत्रेन्द्रः** परमैश्वर्य्यहेतुः सूर्य्यः **अधिपतिः** अधिष्ठाता **आसीत्** अस्ति **येन क्षत्रं** राज्यं क्षत्रियकुलं वा **असृज्यत** सृष्टं, **तं सप्तदशभिः** दश पाद्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदर्वाङ् नाभेस्तत्सप्तदशं तैः **अस्तुवत** स्तुवन्तु ।

**येन बृहस्पतिः** बृहतां पालको वैश्यः **अधिपतिः** अधिष्ठाता **सृष्ट आसीत्** अस्ति, **ग्राम्याः** ग्रामे भवाः **पशवः** गवादयः **असृज्यन्त, तं परमेश्वरं सप्तदशभिरस्तुवत** स्तुवन्तु ॥ १४ । २९ ॥

ज्यन्त) रचे हैं, जिसमें (आर्त्तवाः) ऋतुओं में विद्यमान गुण (अधिपतयः) अधिपति रूप में (आसन्) हैं, उसकी (एकादशभिः) दस प्राण और ग्यारहवां आत्मा इनसे (अस्तुवत) स्तुति करो ।

जिसने (मासाः) चैत्र आदि मास (असृज्यन्त) रचे हैं, और जिसने (पञ्चदशभिः) प्रतिपदा आदि पन्द्रह तिथियों से युक्त (संवत्सरः) वर्ष (अधिपतिः) अधिष्ठाता बनाया (आसीत्) है; उसकी (त्रयोदशभिः) दस प्राण, दो प्रतिष्ठा और तेरहवाँ आत्मा इनसे (अस्तुवत) स्तुति करो ।

जिसमें (इन्द्रः) परम ऐश्वर्य का हेतु सूर्य (अधिपतिः) अधिष्ठाता (आसीत्) है, जिसने (क्षत्रम्) राज्य वा क्षत्रियकुल को (असृज्यत) रचा है, उसकी (सप्तदशभिः) दस पांव की अङ्गुलियाँ, दो जंघा दो जानु चार, दो प्रतिष्ठा, एक नाभि के नीचे का भाग इनसे (अस्तुवत) स्तुति करो ।

जिसने (बृहस्पतिः) बड़ों के पालक वैश्य को रचा (आसीत्) है, (ग्राम्याः) ग्रामीण (पशवः) गौ आदि पशुओं को (असृज्यन्त) उत्पन्न किया है उस परमेश्वर की (सप्तदशभिः) उक्त सत्रह साधनों से (अस्तुवत) स्तुति करो ॥ १४ । २९ ॥

[हे मनुष्याः ! यूयं येन पितरोऽसृज्यन्त, येन ऋतवोऽसृज्यन्त ···तमस्तुवत]

**भावार्थः**—हे मनुष्याः ! भवन्तो येन ऋत्वादयः प्रजापालका निर्मिताः पाल्याश्च, येन कालनिर्मापकाः सूर्यादयः सर्वे पदार्थाः सृष्टास्तं परमात्मानमुपासीरन् ॥ १४ । २९ ॥

**भावार्थ**—हे मनुष्यो ! आप—जिसने ऋतु आदि प्रजा के पालक तथा अन्य गौ आदि पालन के योग्य पदार्थ रचे हैं और जिसने काल के निर्माता सूर्य आदि सब पदार्थ उत्पन्न किए हैं उस परमात्मा की उपासना करो ॥ १४ । २९ ॥

**भा० पदार्थः**—पितरः=ऋत्वादयः प्रजापालकाः । अस्तुवत=उपासीरन् ॥

**भाष्यसार**—**जगत्स्रष्टा ईश्वर ही उपास्यदेव है**—परमेश्वर संसार का रचयिता है, वह पालकों का भी पालक है । उसने पालन करने वाले वर्ष को तथा माता की तरह पालन करने वाली भूमि को बनाया है । उसने ही भिन्न-भिन्न ऋतुओं के जनक सूर्यादि को रचा है । उसकी उपासना समस्त प्राण-शक्तियों से और आत्मा से करनी चाहिए ।

सूर्य की तरह अपने प्राणों को प्रदीप्त बनाकर ही दशों प्राणों से, दो प्रतिष्ठा तथा आत्मा से परमेश्वर की उपासना करने के योग्य बनता है । ईश्वर-रचित सूर्य सब ऐश्वर्यों का कारण है । सब प्रकार की शक्तियाँ सूर्य से प्राप्त होती हैं । अतः क्षत्रकुल का जन्म सूर्य से माना जाता है । शरीर के अङ्गों को हृष्ट-पुष्ट बनाने के लिए सूर्य की उपासना करनी चाहिए ॥ १४ । २९ ॥

विश्वदेवः। **जगदीश्वरः**=स्पष्टम्। पूर्वस्य ब्राह्मी जगती। निषादः।
पञ्चविंशत्येतस्य ब्राह्मी पङ्क्तिश्छन्दः। पञ्चमः स्वरः॥

**पुनः स कीदृश इत्याह॥**

फिर वह जगत्स्रष्टा ईश्वर कैसा है, यह उपदेश किया है॥

**नवदशभिरस्तुवत शूद्रार्य्यावसृज्येतामहोरात्रे ऽ अधिपत्नी ऽ आस्ताम्। एकविꣳशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्॥ त्रयोविꣳशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाधिपतिरासीत्। पञ्चविꣳशत्यास्तुवताऽऽरण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्। सप्तविꣳशत्यास्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा ऽ आदित्या ऽ अनुव्यायँस्त ऽ एवाधिपतय ऽ आसन्॥ ३०॥**

**पदार्थः**—(**नवदशभिः**) दश प्राणाः पञ्चमहाभूतानि मनोबुद्धिचित्ताहंकारैः (**अस्तुवत**) स्तुवन्तु (**शूद्रार्यौ**) शूद्रश्चार्य्यो=द्विजश्च तौ (**असृज्येताम्**) (**अहोरात्रे**) (**अधिपत्नी**) अधिष्ठात्र्यौ (**आस्ताम्**) भवतः (**एकविंशत्या**) मनुष्याणामङ्गैः (**अस्तुवत**) (**एकशफाः**) अश्वादयः (**पशवः**) (**असृज्यन्त**) सृष्टाः (**वरुणः**) जलम् (**अधिपतिः**) (**आसीत्**) (**त्रयोविंशत्या**) पश्वङ्गैः (**अस्तुवत**) (**क्षुद्राः**) नकुलपर्यन्ताः (**पशवः**) (**असृज्यन्त**) (**पूषा**) पुष्टिकर्त्ता भूगोलः (**अधिपतिः**) (**आसीत्**) (**पञ्चविंशत्या**) क्षुद्रपश्ववयवैः (**अस्तुवत**) (**आरण्याः**) अरण्ये भवाः (**पशवः**) सिंहादयः (**असृज्यन्त**) (**वायुः**) (**अधिपतिः**) (**आसीत्**) (**सप्तविंशत्या**) आरण्यपशुगुणैः (**अस्तुवत**) (**द्यावापृथिवी**) (**वि**) विविधतया (**ऐताम्**) प्राप्नुतः (**वसवः**) अग्न्यादयोऽष्टौ (**रुद्राः**) प्राणादयः (**आदित्याः**) चैत्रादयो द्वादश मासाः प्रथममध्यमोत्तमा विद्वांसो वा (**अनुव्यायन्**) अनुकूलतयोत्पादिताः (**ते**) (**एव**) (**अधिपतयः**) (**आसन्**)॥

**अन्वयः**—हे मनुष्याः! यूयं येनोत्पादिते अहोरात्रे अधिपत्नी आस्ताम्। येन शूद्रार्यावसृज्येतां तं नवदशभिरस्तुवत। येनोत्पादितो वरुणोऽधिपतिरासीद्येनैकशफाः पशवोऽसृज्यन्त तं परमात्मानमेकविंशत्यास्तुवत। येन निर्मितः पूषाऽधिपतिरासीद् येन क्षुद्राः पशवोऽसृज्यन्त तं त्रयोविंशत्यास्तुवत। येनोत्पादितो वायुरधिपतिरासीद्येनाऽऽरण्याः पशवोऽसृज्यन्त तं पञ्चविंशत्यास्तुवत येन सृष्टे द्यावापृथिव्यैतां येन चरिता वसवो रुद्रा आदित्या अनुव्यायंस्त एवाऽधिपतय आसंस्तं सप्तविंशत्यास्तुवत॥ ३०॥

**सपदार्थान्वयः**—हे **मनुष्याः! यूयं** येनोत्पादिते **अहोरात्रे अधिपत्नी** अधिष्ठात्र्यौ **आस्तां** भवतः, येन **शूद्रार्य्यौ** शूद्रश्चार्य्यो द्विजश्च तौ **असृज्येतां** तं **नवदशभिः** दश प्राणा पञ्चमहाभूतानि मनोबुद्धिचित्ताऽहङ्कारैः **अस्तुवत** स्तुवन्तु।

येनोत्पादितो **वरुणः** जलम् **अधिपतिरासीत्** भवति येनैकशफाः अश्वादयः **पशवोऽसृज्यन्त** सृष्टाः तं परमात्मानमेकविंशत्या तं मनुष्याणामङ्गैः **अस्तुवत** स्तुवन्तु।

**भाषार्थ**—हे मनुष्यो! तुम—जिसके रचे (अहोरात्रे) दिन-रात (अधिपत्नी) अधिष्ठाता (आस्ताम्) हैं, जिसने (शूद्रार्य्यौ) शूद्र और आर्य=द्विज को (असृज्येताम्) बनाया है, उसकी (नवदशभिः) दस प्राण, पांच महाभूत, मन, बुद्धि, चित्त और अहंकार इनसे (अस्तुवत) स्तुति करो।

जिसका रचा हुआ (वरुणः) जल (अधिपतिः) अधिष्ठाता (आसीत्) है, जिसने (एकशफाः) घोड़े आदि (पशवः) पशुओं को (असृज्यन्त)

उत्पन्न किया है, उस परमात्मा की (अस्तुवत) स्तुति करो।

**येन निर्मितः पूषा** पुष्टिकर्त्ता भूगोलः **अधिपति-रासीत्** भवति, **येन क्षुद्राः** नकुलपर्यन्ताः **पशवः असृज्यन्त** सृष्टाः, **तं त्रयोविंशत्या** पश्वङ्गैः **अस्तुवत** स्तुवन्तु।

जिसका बनाया हुआ (पूषा) पुष्टि कर्त्ता यह भूगोल (अधिपतिः) अधिष्ठाता (आसीत्) है, जिसने (क्षुद्राः) नकुल पर्यन्त क्षुद्र (पशवः) जन्तु (असृज्यन्त) उत्पन्न किए हैं उसकी (त्रयोविंशत्या) तेईस पशु-अङ्गों से (अस्तुवत) स्तुति करो।

**येनोत्पादितो वायुरधिपतिरासीत्** भवति, **येनाऽऽरण्याः** अरण्ये भवाः **पशवः** सिंहादयः **असृज्यन्त** सृष्टाः, **तं पञ्चविंशत्या** क्षुद्रपश्ववयवैः **अस्तुवत** स्तुवन्तु।

जिसका उत्पन्न किया हुआ (वायुः) वायु (अधिपतिः) अधिष्ठाता (आसीत्) है, जिसने (आरण्याः) जंगली (पशवः) सिंह आदि पशुओं को (असृज्यन्त) उत्पन्न किया है, उसकी (पंचविंशत्या) पच्चीस क्षुद्र-पशुओं के अवयवों से (अस्तुवत स्तुति करो।

**येन सृष्टे द्यावापृथिवी व्यैतां** विविधतया प्राप्नुतः, **येन रचिता वसवः** अग्न्यादयोऽष्टौ **रुद्राः** प्राणादयः **आदित्याः** चैत्रादयो द्वादशाः मासाः प्रथममध्यमोत्तमा विद्वांसो वा **अनुव्यायन्** अनुकूलतयोत्पादिताः, **त एव अधिपतय आसन्** भवन्ति, **तं सप्तविंशत्या** आरण्यपशुगुणैः **अस्तुवत** स्तुवन्तु॥ १४। ३०॥

जिसके रचे (द्यावापृथिवी) प्रकाश और भूमि (व्यैताम्) विविध रूपों में प्राप्त होते हैं, जिसके रचे (वसवः) अग्नि आदि, आठ वसु, (रुद्राः) प्राण आदि, (आदित्याः) चैत्र आदि बारह मास वा प्रथम, मध्यम और उत्तम विद्वान (अनुव्यायन्) अनुकूलता से उत्पन्न किए हैं, (ते) वे (एव) ही (अधिपतय) अधिष्ठाता (आसन्) हैं उसकी (सप्तविंशत्या) सत्ताईस आरण्य=जंगली पशुओं के गुणों से (अस्तुवत) स्तुति करो॥ १४। ३०॥

[हे मनुष्याः!···येन शूद्रार्यावसृज्येतां, येनैकशफाः पशवोऽसृज्यन्त, येन क्षुद्राः पशवोऽसृज्यन्त]

**भावार्थः**—हे मनुष्याः! येनार्याः शूद्रा दस्यवश्च मनुष्याः सृष्टा, येन स्थूलसूक्ष्मा प्राणिदेहा महद्ध्रस्वाः पशव, एतेषां पालनसाधनानि च।

**भावार्थ**—हे मनुष्यो! जिसने आर्य, शूद्र और दस्यु मनुष्यों को उत्पन्न किया है, जिसने स्थूल, सूक्ष्म प्राणियों के देह तथा बड़े-छोटे पशु और इनके पालन के साधन रचे हैं,

[येन···वसवो रुद्रा आदित्या अनुव्यायन्···तं···अस्तुवत]

यस्य सृष्टावल्पविद्याः समग्रविद्याश्च विद्वांसो भवन्ति, तमेव यूयमुपास्यं मन्यध्वम्॥

जिसकी सृष्टि में अल्प विद्या और पूर्ण विद्या वाले विद्वान् होते हैं उसी को तुम उपास्य मानो॥

**भा० पदार्थः**—वसवः=अल्पविद्या विद्वांसः। आदित्याः=समग्रविद्या विद्वांसः॥

**भाष्यसार—जगत्स्रष्टा ईश्वर ही उपास्य देव है**—सभी मनुष्यों को चाहिए कि जिस परमेश्वर के रचे दिन-रात सब प्राणियों के अधिष्ठाता हैं। जिसने मनुष्य जाति के शूद्रों तथा आर्यों को बनाया है। जिसका रचा जल जीवनाधार है। जिसने एक खुर वाले अश्वादि को, नकुल पर्यन्त क्षुद्र-जीवों को, प्राणाधार वायु को और सिंहादि जंगली पशुओं को बनाया है। समस्त भूगोल का रचयिता

वही ईश्वर है। उसने ही वसु, रुद्र और आदित्य संज्ञक देवों को बनाया है। इन सबका अधिष्ठाता परमेश्वर ही है। अतः उसके बनाये पदार्थों को जानकर जीवनोपयोगी बनाना चाहिए। और उनसे सामर्थ्य प्राप्त करके ईश्वर की उपासना करनी चाहिए ।। १४ । ३० ।।

विश्वदेवः । **प्रजापतिः=ईश्वरः** । स्वराड् ब्राह्मी जगती । निषादः ।।

**पुनः स एव विषय उपदिश्यते ।।**

वह जगत्स्रष्टा ईश्वर कैसा है, यह फिर उपदेश किया है ।।

**नवविꣳशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीत् ।**
**एकत्रिꣳशतास्तुवत प्रजा ऽ असृज्यन्त यवाश्चायवाश्चाधिपतय ऽ आसन् ॥**
**त्रयस्त्रिꣳशतास्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥ ३१ ॥**

**पदार्थः**—(**नवविंशत्या**) एतत्संख्याकैर्वनस्पतिगुणैः (**अस्तुवत**) जगत्स्रष्टारं परमात्मानं प्रशंसत (**वनस्पतयः**) अश्वत्थादयः (**असृज्यन्त**) सृष्टाः (**सोमः**) ओषधिराजः (**अधिपतिः**) अधिष्ठाता (**आसीत्**) भवति (**एकत्रिंशता**) प्रजाङ्गैः (**अस्तुवत**) प्रशंसत (**प्रजाः**) (**असृज्यन्त**) निर्मिताः (**यवाः**) मिश्रिताः (**च**) (**अयवाः**) अमिश्रिताः (**च**) (**अधिपतयः**) अधिष्ठातारः (**आसन्**) सन्ति (**त्रयस्त्रिंशता**) महाभूतगुणैः (**अस्तुवत**) प्रशंसत (**भूतानि**) महान्ति तत्त्वानि (**अशाम्यन्**) शाम्यन्ति (**प्रजापतिः**) प्रजापालक ईश्वरः (**परमेष्ठी**) परमेश्वररूपे आकाशे वाऽभिव्याप्य तिष्ठतीति (**अधिपतिः**) अधिष्ठाता (**आसीत्**) **अत्राऽपि लोकन्ता इन्द्रमिति मन्त्रत्रयप्रतीकानि पूर्ववत्केनचित् क्षिप्तानीति वेद्यम्** ।। ३१ ।।

**प्रमाणार्थ**—इस मन्त्र में भी 'लोकन्ता इन्द्रम्' यह वाक्यांश पूर्ववत् किसी ने मिला दिया है, अतः त्याज्य होने से यहाँ नहीं लिखा है।

**अन्वयः**—हे मनुष्याः ! यूयं येनोत्पादितः सोमोऽधिपतिरासीद्येन ते वनस्पतयोऽसृज्यन्त तं जगदीश्वरं नवविंशत्यास्तुवत। यासां यवा मिश्रिता पर्वतादयश्च त्रसरेण्वादयश्चाऽयवाः प्रकृत्यवयवाः सत्त्वरजस्तमांसि गुणाः परमाण्वादयश्चाऽधिपतय आसन् ता असृज्यन्त तमेकत्रिंशतास्तुवत। यस्य प्रभावाद् भूतान्यशाम्यन्यः प्रजापतिः परमेष्ठ्यधिपतिरासीत्तं त्रयस्त्रिंशतास्तुवत ।। ३१ ।।

**सपदार्थान्वयः**—हे **मनुष्याः ! यूयं येनोत्पादितः सोमः** ओषधिराजः **अधिपतिः** अधिष्ठाता **आसीत्** भवति, **येन ते वनस्पतयः** अश्वत्थादयः **असृज्यन्त** सृष्टाः, **तं जगदीश्वरं नवविंशत्या** एतत्संख्याकैर्वनस्पतिगुणैः **अस्तुवत** (जगत्स्रष्टारं परमात्मानं) प्रशंसत।

**यासां यवाः**=**मिश्रिताः पर्वतादयश्च त्रसरेण्वादयश्च** मिश्रिताः, **अयवाः प्रकृत्यवयवाः सत्त्वरजस्तमांसि गुणाः परमाण्वादयश्च** अमिश्रिताः **अधिपतयः** अधिष्ठातारः **आसन्** सन्ति, **ताः असृज्यन्त**

**भाषार्थ**—हे मनुष्यो ! तुम—जिसका उत्पन्न किया हुआ (सोमः) ओषधियों का राजा सोम (अधिपतिः) अधिष्ठाता (आसीत्) है, जिसने वे (तेवनस्पतयः) अश्वत्थ=पीपल आदि वनस्पतियों को (असृज्यन्त) उत्पन्न किया है, उस जगदीश्वर की (नवविंशत्या) उनतीस वनस्पति के गुणों से (अस्तुवत) प्रशंसा करो।

जिनके—(यवाः) अवयव मिश्रित मिले हुए हैं, वे पर्वत आदि और त्रसरेणु आदि, और (अयवाः) जिनके अवयव अमिश्रित=पृथक्-पृथक् हैं वे प्रकृति के अवयव सत्त्व, रज, तम गुण और परमाणु आदि

निर्मिताः, **तमेकत्रिंशता** प्रजाङ्गैः **अस्तुवत** प्रशंसत ।

(अधिपतयः) अधिष्ठाता हैं, उन्हें (असृज्यन्त) कार्य रूप बनाता है, उस जगदीश्वर की (एकत्रिंशता) इकत्तीस प्रजा के अङ्गों से (अस्तुवत) प्रशंसा करो ।

**यस्य प्रभावाद् भूतानि** महान्ति तत्त्वानि **अशाम्यन्** शाम्यन्ति, **यः प्रजापतिः** प्रजापालक ईश्वरः **परमेष्ठी** परमेश्वररूपे आकाशे वाऽभिव्याप्य तिष्ठतीति **अधिपतिः** अधिष्ठाता **आसीत्** भवति, **तं त्रयस्त्रिंशता** महाभूतगुणैः **अस्तुवत** प्रशंसत ॥

जिसके प्रभाव से (भूतानि) महान् तत्त्व (अशाम्यन्) शान्त हो जाते हैं, जो (प्रजापतिः) प्रजा का पालक ईश्वर (परमेष्ठी) परमेश्वर-रूप वा आकाश में व्यापक होकर स्थित है, वह (अधिपतिः) सबका अधिष्ठाता (आसीत्) है, उसकी (त्रयस्त्रिंशता) तेंतीस महाभूतों के गुणों से (अस्तुवत) करो ॥ १४ । ३१ ॥

[हे मनुष्याः ! येन ते वनस्पतयोऽसृज्यन्त तं जगदीश्वरम्...अस्तुवत]

**भावार्थः**—येन जगदीश्वरेण लोकानां रक्षणाय वनस्पत्यादीन् सृष्ट्वा ध्रियन्ते, व्यवस्थाप्यन्ते, स एव सर्वैर्मनुष्यैरुपासनीयः ॥ १४ । ३१ ॥

**भावार्थ**—जो जगदीश्वर लोकों की रक्षा के लिए वनस्पति आदि को रचकर धारण और व्यवस्थित कर रहा है उसी की सब मनुष्य उपासना करें ॥ १४ । ३१ ॥

**अन्यत्र व्याख्यात**—(क) 'त्रयस्त्रिंशतास्तुवत०' अर्थात् व्यवहार के ये (३३) तेंतीस देवता हैं—(८) आठ वसु, (११) ग्यारह रुद्र, (१२) बारह आदित्य, (१) एक इन्द्र, और (१) एक प्रजापति । इनमें से आठ वसु ये हैं—अग्नि, पृथिवी, वायु, अन्तरिक्ष, आदित्य, द्यौ, चन्द्रमा और नक्षत्र । इनका वसु नाम इस कारण से है कि सब पदार्थ इन्हीं में बसते हैं और ये ही सबके निवास करने के स्थान हैं । ग्यारह रुद्र ये कहाते हैं—जो शरीर में दस प्राण हैं अर्थात् प्राण, अपान, व्यान, समान, उदान, नाग, कूर्म, कृकल, देवदत्त, धनञ्जय और ग्यारहवाँ जीवात्मा है । क्योंकि जब ये इस शरीर से निकल जाते हैं, तब मरण होने से उसके सब सम्बन्धी लोग रोते हैं, वे निकलते हुए उनको रुलाते हैं, इससे इनका नाम रुद्र हैं । इसी प्रकार(१२)आदित्य बारह महीनों को कहते हैं । क्योंकि ये सब जगत् के पदार्थों का आदान अर्थात् सबकी आयु को ग्रहण करते चले जाते हैं । इसी से इनका नाम आदित्य है । ऐसे ही इन्द्र नाम बिजली का है । क्योंकि यह उत्तम ऐश्वर्य की विद्या का मुख्य हेतु है और यज्ञ को प्रजापति इसलिए कहते हैं कि उससे वायु और वृष्टि-जल की शुद्धि द्वारा प्रजा का पालन होता है । तथा पशुओं की यज्ञ संज्ञा होने का यह कारण है कि इनसे भी प्रजा का जीवन होता है ।

ये सब मिलके अपने-अपने दिव्य-गुणों से तेतीस देव कहाते हैं; और तीन देव-स्थान, जन्म और नाम को कहते हैं । दो देव-अन्न और प्राण को कहते हैं । अध्यर्धदेव अर्थात् जिससे सबका धारण और वृद्धि होती है, जो सूत्रात्मा वायु सब जगत् में भर रहा है, उसको अध्यर्धदेव कहते हैं (**ऋग्वेदादिभाष्यभूमिका वेदविषयविचार**) ॥

(ख) जो "त्रयस्त्रिंशत्त्रिंशता०" इत्यादि वेदों में प्रमाण है । इसकी व्याख्या शतपथ में की है कि तेंतीस देव अर्थात् पृथिवी, जल, अग्नि, वायु, आकाश, चन्द्रमा, सूर्य और नक्षत्र, सब सृष्टि के निवास-स्थान होने से आठ वसु । प्राण, अपान, व्यान, उदान, समान, नाग, कूर्म, कृकल, देवदत्त, धनञ्जय और जीवात्मा ये ग्यारह रुद्र इसलिए कहाते हैं कि जब शरीर को छोड़ते हैं, तब रोदन कराने वाले होते हैं ।

संवत्सर के बारह महीने बारह आदित्य इसीलिए हैं कि ये सबकी आयु को लेते जाते हैं। बिजली का नाम इन्द्र इस हेतु से है कि यह परम ऐश्वर्य का हेतु है। यज्ञ को प्रजापति कहने का कारण यह है कि जिससे वायु, वृष्टि-जल ओषधि की शुद्धि, विद्वानों का सत्कार और नाना प्रकार की शिल्प विद्या से प्रजा का पालन होता है।

ये तेंतीस पूर्वोक्त गुणों के योग से देव कहाते हैं। इनका स्वामी और सबसे बड़ा होने से परमात्मा चौंतीसवाँ उपास्यदेव शतपथ के चौदहवें काण्ड में स्पष्ट लिखा है। इसी प्रकार अन्यत्र भी लिखा है (**सत्यार्थप्रकाश सप्तमसमुल्लास**)॥

**भाष्यसार—जगत्-स्रष्टा ईश्वर ही उपास्य देव है**—जिस परमेश्वर ने पञ्चमहाभूतों के परमाणुओं के मिश्रण से त्रसरेणु से लेकर पर्वत तक के पदार्थों को बनाया है। और जो परमेश्वर अमिश्रित प्रकृति के अवयव सतोगुण, रजोगुण तथा तमोगुण का अधिष्ठाता है। जिसने सोमादि रोग-नाशक ओषधियों को और पीपलादि वनस्पतियों को बनाया है। वह परमात्मा आकाश की तरह सर्वत्र व्यापक तथा सबकी रक्षा करने वाला है। सब पदार्थों को रचकर व्यवस्था में चला रहा है। उसके बनाये पदार्थों के गुण-विज्ञान को जानकर ही परमेश्वर के प्रति श्रद्धा पैदा होती है। अतः परमसुख के लाभ के लिए उसी की उपासना करनी चाहिए॥ १४। ३१॥ ●

[पूर्वापराध्यायार्थसंगतिमाह—]

अस्मिन्नध्याये वसन्ताद्यृतुवर्णनादेतदर्थस्य पूर्वाऽध्यायार्थेन सह संगतिरस्तीति ज्ञेयम्॥ १४॥

इस अध्याय में वसन्त आदि ऋतुओं के वर्णन से इस अध्याय के अर्थ की पूर्व अध्याय के अर्थ के साथ संगति है, ऐसा समझें॥ १४॥

**इति श्रीयुतपण्डितसुदर्शनदेवाचार्यकृते दयानन्द-यजुर्वेदभाष्य-भास्करे चतुर्दशोऽध्यायः सम्पूर्णः॥**

॥ ओ३म् ॥

# ❋ अथ पञ्चदशाऽध्यायारम्भः ❋

ओं विश्वा॑नि देव सवितर्दुरि॒ता॒नि॒ परा॑ सुव । यद्भ॒द्रं तन्न॒ऽआ सु॑व ॥ १ ॥

य० ३० । ३ ॥

परमेष्ठी । **अग्निः=राजा सेनापतिः** । त्रिष्टुप् । धैवतः ॥

**अस्य प्रथममन्त्रे राजराजपुरुषैः किं किं कर्त्तव्यमित्याह ॥**

अब पन्द्रहवें अध्याय का आरम्भ है । इस के प्रथम मन्त्र में राजा और राजपुरुषों को क्या-क्या करना चाहिए, इस विषय का उपदेश किया है ॥

**अग्ने॑ जा॒तान् प्रणु॑दा नः स॒पत्ना॒न् प्रत्यजा॑तान्नुद जातवेदः ।**
**अधि॑ नो ब्रूहि सु॒मना॒ऽ अहे॑डँस्तव॑ स्याम॒ शर्मँ॑स्त्रि॒वरू॑थ ऽ उ॒द्भौ ॥ १ ॥**

**पदार्थः**—(**अग्ने**) राजन् वा सेनापते (**जातान्**) उत्पन्नान् प्रसिद्धान् (प्र) (**नुद**) दूरे प्रक्षिप । अत्र द्व्यचोऽतस्तिङ इति दीर्घः (**नः**) अस्माकम् (**सपत्नान्**) सपत्नीव वर्त्तमानानरीन् (**प्रति**) (**अजातान्**) अप्रकटान् (**नुद**) प्रेर्ष्व (**जातवेदः**) जातबल (**अधि**) (**नः**) अस्मान् (**ब्रूहि**) उपदिश (**सुमनाः**) प्रसन्नस्वान्तः (**अहेडन्**) अनादरमकुर्वन् (**तव**) (**स्याम**) (**शर्मन्**) गृहे (**त्रिवरूथे**) त्रीणि वरूथान्याध्यात्मिकाधिदैविकाधिभौतिकानि सुखानि यस्मिन् (**उद्भौ**) उदुत्कृष्टानि वस्तूनि भवन्ति यस्मिंस्तस्मिन् ॥ १ ॥

**प्रमाणार्थ**—(**नुद**) यहाँ 'द्व्यचोऽतस्तिङः' (६ । ३ । १३५) से दीर्घ है ॥

**अन्वयः**—हे अग्ने ! त्वं नो जातान् सपत्नान् प्रणुदा हे जातवेदस्त्वमजातान् शत्रून्नुद अस्मान् अहेडन् सुमनास्त्वं नोऽस्मान् प्रत्यधिब्रूहि यतो वयं तवोद्भौ त्रिवरूथे शर्मन् सुखिनः स्याम ॥ १ ॥

**सपदार्थान्वयः**—**हे अग्ने** ! राजन् वा सेनापते ! **त्वं नः** अस्माकं **जातान्** उत्पन्नान् प्रसिद्धान् **सपत्नान्** सपत्नीव वर्त्तमानानरीन् **प्र+णुद** दूरे प्रक्षिप ।

**भावार्थ**—हे (अग्ने) राजन् वा सेनापति ! तू—(नः) हमारे (जातान्) उत्पन्न एवं प्रसिद्ध (सपत्नान्) सपत्नी के तुल्य वर्ताव करने वाले शत्रु-जनों को (प्र+णुद) दूर हटा ।

हे जातवेदः ! जातबल ! **त्वमजातान्** अप्रकटान् शत्रून् **नुद** प्रेर्ष्व । **अस्मानहेडन्** अनादरमकुर्वन् **सुमनाः** प्रसन्नस्वान्तः **त्वं नः**=**अस्मान् प्रति, अधि+ब्रूहि** उपदिश । **यतो वयं तवोद्भौ** उदुत्कृष्टानि वस्तूनि भवन्ति यस्मिंस्तस्मिन् **त्रिवरूथे** त्रीणि वरूथान्याध्यात्मिकाधिदैविकाधिभौतिकानि सुखानि यस्मिन् **शर्मन्** गृहे सुखिनः स्याम ॥ १५ । १ ॥

हे (जातबल) बलवान् राजन् ! तू—(अजातान्) अप्रसिद्ध शत्रुओं को (नुद) दूर कर । (अस्मान्) (अहेडन्) अनादर न करता हुआ (सुमनाः) प्रसन्न-चित्त होकर तू—(नः) हमारे (प्रति) प्रति (अधि+ब्रूहि) उत्तम उपदेश कर । जिससे हमें (तव) तेरे (उद्भौ) उत्कृष्ट वस्तुओं वाले, (त्रिवरूथे) तीन—आध्यात्मिक, आधिदैविक और आधिभौतिक सुखों वाले (शर्मन्) घर में सुखी रहें ॥ १५ । १ ॥

[हे अग्ने ! त्वं नो जातान् सपत्नान् प्रणुद...त्वमजातान् शत्रून् नुद]

**भावार्थः**— राजादिसभ्यजनैर्गुप्तैश्चारैः प्रसिद्धाऽप्रसिद्धान् शत्रून् निश्चित्य वशं नेयाः ।

**भावार्थ**—राजा आदि सभासद् जन गुप्त दूतों से प्रसिद्ध और अप्रसिद्ध शत्रुओं का निश्चय करके उन्हें वश में करें ।

[अस्मानहेडन् सुमनास्त्वं...प्रत्यधिब्रूहि]

न कस्यापि धार्मिकस्यानादरोऽधार्मिकस्यादरश्च कर्त्तव्यः,

किसी धार्मिक पुरुष का अनादर और अधार्मिक जन का आदर न करें ।

[यतो वयं तव...त्रिवरूथे शर्मन् सुखिनः स्याम]

यतः सर्वे सज्जना विश्वस्ताः सन्तो राष्ट्रे वसेयुः ॥ १५ । १ ॥

जिससे सब सज्जन पुरुष विश्वासपूर्वक राष्ट्र में वास करें ॥ १५ । १ ॥

**भा० पदार्थः**—सपत्नान्=शत्रून् । अजातान्=अप्रसिद्धान् । त्रिवरूथे=राष्ट्रे ।

**भाष्यसार—राजा और सेनापति के उत्तम कर्त्तव्य**—राजा और सेनापति का मुख्य धर्म यह है कि अपने सेनाबल को बढ़ाकर उत्तमोत्तम अस्त्र-शस्त्रों के चलाने में सेना को प्रशिक्षित करें और राज्य में जो भी छिपकर शत्रुता का व्यवहार करते हैं अथवा प्रकट रूप में शत्रु हों, उनको समूल नष्ट करके राज्य की सर्वथा रक्षा किया करें । जिससे प्रजा में किसी प्रकार का आतङ्क न रहे । राज्य में जो धार्मिक व विद्वान् पुरुष हों, उनका सदा सत्कार किया करें । क्योंकि अच्छे पुरुषों की रक्षा करने से अच्छाई बढ़ती है । और प्रजा अपने निवास स्थानों में सुख-पूर्वक रहती हुई सभी प्रकार के ऐश्वर्यों को प्राप्त करने में समर्थ होती है । और प्रजा में आध्यात्मिक आधिदैविक और आधिभौतिक सुखों की वृद्धि होती है ॥ १५ । १ ॥

परमेष्ठी । **अग्निः=राजा, राजपुरुषः** । भुरिक् त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

राजा और राजपुरुषों को क्या-क्या करना चाहिए, यह फिर उपदेश किया है ॥

**सहसा जातान् प्रणुदा नः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व ।**
**अधि नो ब्रूहि सुमनस्यमानो वयᳬ स्याम प्रणुदा नः सपत्नान् ॥ २ ॥**

**पदार्थः**—(**सहसा**) बलेन सह (**जातान्**) प्रादुर्भूतान् विरोधिनः (**प्र**) (**नुद**) विजयस्व। अत्र द्वयचोऽतस्तिङ इति दीर्घः (**नः**) अस्माकम् (**सपत्नान्**) सपत्नीव वर्त्तमानान् शत्रून् (**प्रति**) (**अजातान्**) युद्धेऽप्रकटान् शत्रुसेविनो मित्रान् (**जातवेदः**) जातप्रज्ञान (**नुदस्व**) पृथक् कुरु (**अधि**) (**नः**) (**ब्रूहि**) विजयविधिमुपदिश (**सुमनस्यमानः**) सुष्ठु विचारयन् (**वयम्**) (**स्याम**) भवेम (**प्र**) (**नुद**) हिन्धि। अत्रापि पूर्ववद्दीर्घः (**नः**) अस्माकम् (**सपत्नान्**) विरोधे वर्त्तमानान् सम्बन्धिनः ॥ २ ॥

**प्रमाणार्थ**--(**नुद**) यहाँ 'द्वयचोऽतस्तिङः' (६ । ३ । १३५) से दीर्घ है। (**नुद**) यहाँ भी पूर्ववत् दीर्घ है॥

**अन्वयः**—हे जातवेदस्त्वं नः सहसा जातान्सपत्नान् प्रणुद। तान् प्रत्यजातान् नुदस्व। सुमनस्यमानस्त्वं नोऽधि ब्रूहि। वयं तव सहायाः स्याम। यान्नः सपत्नान् त्वं प्रणुद तान् वयमपि प्रणुदेम ॥ २ ॥

**सपदार्थान्वयः**—**हे जातवेदः!** जातप्रज्ञान! **त्वं नः** अस्माकं **सहसा** बलेन सह **जातान्** प्रादुर्भूतान् विरोधिनः **सपत्नान्** सपत्नीव वर्त्तमानान् शत्रून् **प्र+णुद** विजयस्व **तान् प्रत्यजातान्** युद्धेऽप्रकटान् शत्रुसेविनो मित्रान् **नुदस्व** पृथक् कुरु। **सुमनस्यमानः** सुष्ठु विचारयन् **त्वं नः** अस्मान् **अधि+ब्रूहि** विजयविधिमुपदिश। **वयं तव सहायाः स्याम** भवेम **यान् नः** अस्माकं **सपत्नान्** विरोधे वर्त्तमानान् सम्बन्धिनः **त्वं प्र+णुद** हिन्धि, **तान् वयमपि प्रणुदेम** ॥ १५ । २ ॥

**भाषार्थ**—हे (जातवेदः) उत्तम ज्ञान वाले राजन्! तू—(नः) हमारे (सहसा) बल से (जातान्) प्रसिद्ध विरोधी (सपत्नान्) सपत्नी के समान वर्ताव करने वाले शत्रु जनों को (प्र+णुदस्व) जीत, उन (प्रत्यजातान्) युद्ध में प्रकट शत्रु के सेवक मित्रों को (नुदस्व) पृथक् कर। (सुमनस्यमानः) उत्तम विचार करता हुआ तू—(नः) हमें (अधि+ब्रूहि) विजय-विधि का उपदेश कर। (वयम्) हम (तव) तेरे सहायक (स्याम) हों। जिन (नः) हमारे (सपत्नान्) विरोध में वर्तमान सम्बन्धियों का तू (प्र+णुद) हनन करता है, उनका हम भी हनन करें।

[हे जातवेद! त्वं···सपत्नान् प्रणुद]

**भावार्थः**—ये राजभृत्याः शत्रुनिवारणे यथाशक्ति न प्रयतन्ते, ते सम्यग् दण्डचाः।

**भावार्थ**—जो राज-भृत्य शत्रुओं के निवारण में यथाशक्ति प्रयत्न नहीं करते उनको भली-भाँति दण्डित करें।

[वयं तव सहायाः स्याम]

ये स्वसहायाः स्युस्तान् राजा सत्कुर्यात् ॥ १५॥

जो अपने सहायक हों उनका राजा सत्कार करे॥ १५ । २॥

**भाष्यसार**—**राजा के कर्त्तव्य**—राजा को उचित है कि वह राजकीय कार्यों में कार्य-कुशल और कर्त्तव्य-परायण सेवकों की ही नियुक्ति करे। राजा अपनी प्रजा के कार्यों को गुप्तचरों के द्वारा सदा जानने का यत्न करे और अपने बल को बढ़ाकर अपने शत्रुओं का विनाश करे। प्रजा में भी जो मनुष्य शत्रुओं से सहयोग अथवा मित्रता करते हों, उनको भी उत्तम विचार करके यथायोग्य दण्ड देवे। अपने राजकीय पुरुषों को सदुपदेश से सन्मार्ग पर चलावे, और अपने सहयोगियों का सदा सत्कार किया करे। फिर जो राजकीय पुरुष अथवा प्रजा-जन शत्रुओं का साथ देवें और अपने-अपने

कर्त्तव्य का पालन न करते हों, अथवा रिश्वतादि लेकर प्रजा को दुःख देते हों उन्हें सदा दण्ड देकर अपने वश में करता रहे। इससे प्रजा में शान्ति रहती है ॥ १५ । २ ॥

परमेष्ठी। **दम्पती**=स्त्रीपुरुषौ ॥ ब्राह्मी त्रिष्टुप्। धैवतः ॥

**अथ पतिपत्नीधर्म्ममाह ॥**

अब स्त्री पुरुष के धर्म का उपदेश किया है ॥

**षोडशी स्तोम ऽ ओजो द्रविणं चतुश्चत्वारिंश स्तोमो वर्चो द्रविणम्।**
**अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे ऽ अभि गृणन्तु देवाः।**
**स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणा यजस्व ॥ ३ ॥**

**पदार्थः**—(षोडशी) प्रशस्ताः षोडश कलाः सन्ति यस्मिन् सः (**स्तोमः**) स्तोतुमर्हः (**ओजः**) पराक्रमः (**द्रविणम्**) धनम् (**चतुश्चत्वारिंशः**) एतत्संख्यापूरको ब्रह्मचर्यव्यवहारकरः (**स्तोमः**) स्तुवन्ति येन सः (**वर्चः**) अध्ययनम् (**द्रविणम्**) बलं वा (**अग्नेः**) पावकस्य (**पुरीषम्**) पूर्त्तिकरम् (**असि**) (**अप्सः**) न विद्यते परपदार्थस्याप्सो=भक्षणं यस्य सः (**नाम**) प्रसिद्धम् (**ताम्**) (**त्वा**) त्वाम् (**विश्वे**) (**अभि**) (**गृणन्तु**) प्रशंसन्तु (**देवाः**) विद्वांसः (**स्तोमपृष्ठा**) स्तोमाः पृष्ठा=ज्ञापयितुमिष्टा यस्याः सा (**घृतवती**) प्रशस्ताज्यादियुक्ता (**इह**) गृहाश्रमे (**सीद**) (**प्रजावत्**) बह्व्यः प्रजा यस्मात्तत् (**अस्मे**) अस्मभ्यम् (**द्रविणा**) द्रविणं=धनम्। अत्र सुपां सुलुगित्याकारादेशः (**यजस्व**) देहि ॥ ३ ॥

**प्रमाणार्थ**—(**द्रविणा**) यहाँ 'सुपां सुलुक्०' (७।१।३९) से आकार-आदेश है ॥

**अन्वयः**—यः षोडशी स्तोम ओजो द्रविणं यश्चत्वारिंशः स्तोमो नाम वर्चो द्रविणं च ददाति योऽग्नेः पुरीषं प्राप्तोऽप्सोऽसि तं त्वां तां च विश्वे देवा अभिगृणन्तु सा त्वं स्तोमपृष्ठा घृतवती सतीह गृहाश्रमे सीदास्मे प्रजावद् द्रविणा यजस्व ॥ ३ ॥

**सपदार्थान्वयः**—**यः षोडशी** प्रशस्ताः षोडश कलाः सन्ति यस्मिन् सः **स्तोमः** स्तोतुमर्हः **ओजः** पराक्रमः **द्रविणं** धनं, **यश्चत्वारिंशः** एतत्संख्यापूरको ब्रह्मचर्य्यव्यवहारकरः **स्तोमः** स्तुवन्ति येन सः **नाम** प्रसिद्धं **वर्चः** अध्ययनं **द्रविणं** बलं वा **च ददाति, योऽग्नेः** पावकस्य **पुरीषं** पूर्त्तिकरं **प्राप्तोऽप्सः** न विद्यते परपदार्थस्याऽप्सो=भक्षणं यस्य सः **असि,** [अस्ति] **तं** [**त्वा**]=**त्वां तां च विश्वे देवाः** विद्वांसः **अभिगृणन्तु** प्रशंसन्तु। **सा त्वं स्तोमपृष्ठा** स्तोमाः पृष्ठा=ज्ञापयितुमिष्टा यस्याः सा **घृतवती** प्रशस्ताज्यादियुक्ता **सतीह**=**गृहाऽऽश्रमे सीद**। **अस्मे** अस्मभ्यं **प्रजावत्** बह्व्यः प्रजा यस्मात्तद् **द्रविणा** द्रविणं=धनं **यजस्व** देहि ॥ १५ । ३ ॥

**भाषार्थ**—जो (षोडशी) उत्तम सोलह कलाओं से युक्त (स्तोमः) स्तुति के योग्य (ओजः) पराक्रम तथा (द्रविणम्) धन है, और जो—(चत्वारिंशः) चालीस वर्ष तक ब्रह्मचर्य-व्यवहार करने वाला पुरुष (स्तोमः) स्तुति के हेतु (नाम) प्रसिद्ध (वर्चः) अध्ययन (द्रविणम्) धन वा बल को देता है, जो (अग्नेः) अग्नि की (पुरीषम्) पूर्त्ति करने वाले को प्राप्त होकर (अप्सः) पर-पदार्थ का भक्षण न करने वाला (असि) है, सो [त्वा] तुझ पुरुष और स्त्री की (विश्वे) सब (देवाः) विद्वान् लोग (अभिगृणन्तु) प्रशंसा करें। सो तू स्त्री (स्तोमपृष्ठा) स्तुति को बतलाने वाली (घृतवती) उत्तम घृत आदि पदार्थों से युक्त होकर (इह) इस गृहाश्रम में (प्रजावत्) बहुत प्रजा के हेतु (द्रविणा) धन को (यजस्व) प्रदान कर ॥ १५ । ३ ॥

[ यः षोडशी ··· वर्चो द्रविणं च ददाति, इह गृहाश्रमे सीद ]

**भावार्थः**—मनुष्यैः षोडशकलात्मके जगति विद्याबलं विस्तार्य गृहाश्रमं कृत्वा विद्यादानादीनि कर्माणि सततं कार्याणि ॥ १५ । ३ ॥

**भावार्थ**—मनुष्य—सोलह कलाओं से युक्त जगत् में विद्या और बल को विस्तृत करके, गृहाश्रम कर, विद्या-दान आदि शुभ कर्मों को सदा किया करें ॥ १५ । ३ ॥

**भा० पदार्थः**—षोडशी=षोडशकलात्मकं जगत् । वर्चः=विद्या ।

**भाष्यसार**—**स्त्री-पुरुषों का कर्त्तव्य**—स्त्री और पुरुष जीवन की प्रथम आयु में पूर्ण-ब्रह्मचारी होकर विद्याबल और शारीरिक बलों को प्राप्त करके गृहाश्रम में प्रवेश करें। गृहस्थी को आवश्यक है कि वह पूर्ण स्वस्थ, पराक्रमी, धन-धान्य से सम्पन्न तथा स्तुति के योग्य हो। निर्बल मनुष्य को गृहाश्रम में प्रवेश का अधिकार नहीं है। जो चालीस वर्ष तक ब्रह्मचर्य का पालन करते हैं, उनका विद्या-बल और शारीरिक-बल बढ़ने से उनकी सर्वत्र प्रशंसा होती है। ऐसे पूर्ण-स्वस्थ विद्वान् स्त्री-पुरुष गृहाश्रम में प्रवेश करके अपने-अपने कर्तव्यों के पालने में सदा तत्पर रहें। और कभी भी पर-पदार्थों को ग्रहण करने की मन से इच्छा न करें। दोनों स्त्री-पुरुषों के ऐसे श्रेष्ठ कर्त्तव्य हों, जिनकी विद्वान् पुरुष सदा प्रशंसा किया करें। घृतादि पौष्टिक पदार्थों को सेवन करते हुए ईश्वर की स्तुति में सदा तत्पर रहें, उत्तम सन्तान को उत्पन्न करके उनको सदा योग्य बनावें, और यज्ञादि श्रेष्ठ कार्यों में कभी प्रमाद न करें ॥ १५ । ३ ॥

परमेष्ठी । **विद्वांसः**=स्पष्टम् । निचृदाकृतिः । पञ्चमः ॥

**मनुष्याः प्रयत्नेन साधनैः सुखानि वर्द्धयन्त्वित्याह ॥**

मनुष्यों को चाहिए कि प्रयत्नपूर्वक साधनों से सुख बढ़ावें, यह उपदेश किया है।

**एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्द ऽ आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरं छन्दः ककुप् छन्दस्त्रिककुप् छन्दः काव्यं छन्दो ऽ अङ्कुपं छन्दोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरश्छन्दो भ्रजश्छन्दः ॥ ४ ॥**

**पदार्थः**—(**एवः**) ज्ञानम् (**छन्दः**) आनन्दम् (**वरिवः**) सत्यसेवनम् (**छन्दः**) सुखप्रदम् (**शम्भूः**) सुखं भावुकः (**छन्दः**) आह्लादकारी व्यवहारः (**परिभूः**) सर्वतः पुरुषार्थी (**छन्दः**) सत्यप्रदीपकः (**आच्छत्**) दोषापवारणम् (**छन्दः**) ऊर्जनम् (**मनः**) संकल्पो विकल्पः (**छन्दः**) प्रकाशकरम् (**व्यचः**) शुभगुणव्याप्तिः (**छन्दः**) आनन्दकारि (**सिन्धुः**) नदीव चलनम् (**छन्दः**) (**समुद्रः**) सागर इव गाम्भीर्य्यम् (**छन्दः**) अर्थकरम् (**सरिरम्**) जलमिव सरलता कोमलता (**छन्दः**) जलमिव शान्तिः (**ककुप्**) दिगिव यशः (**छन्दः**) प्रतिष्ठाप्रदम् (**त्रिककुप्**) त्रीणि कानि=सुखानि स्कुभ्नाति येन कर्मणा तत् । **अत्र छान्दसो वर्णलोप इति सलोपः** (**छन्दः**) आनन्दकरम् (**काव्यम्**) कविभिर्निर्मितम् (**छन्दः**) प्रकाशकम् (**अङ्कुपम्**) अङ्कूनि=कुटिलानि गमनानि पाति=रक्षति तज्जलम् (**छन्दः**) तृप्तिकरं कर्म (**अक्षरपङ्क्तिः**) असौ च लोकः (**छन्दः**) आनन्दकरः (**पदपङ्क्तिः**) अयं लोकः (**छन्दः**) सुखसाधकः (**विष्टारपङ्क्तिः**) सर्वा दिशः (**छन्दः**) सुखसाधिकाः (**क्षुरः**) क्षुर इव छेदक आदित्यः (**छन्दः**) विज्ञानम् (**भ्रजः**) दीप्तम् । **अत्र वर्णव्यत्ययेन ह्रस्वत्वम्** (**छन्दः**) स्वच्छन्दानन्दकरः ॥ ४ ॥

**प्रमाणार्थ**—(त्रिककुप्) यहां 'छान्दसो वर्णलोपः' (८।२।२५) इस वार्तिक से 'स्कुभ्' धातु के सकार का लोप है। (भ्रजः) यहाँ वर्ण-व्यत्यय से 'भ्राज' के स्थान में ह्रस्व अकार होकर 'भ्रज' बना है ॥

**अन्वयः**—हे मनुष्याः! यूयं परमप्रयत्नेनैवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरं छन्दः ककुप् छन्दस्त्रिककुप्छन्दः काव्यं छन्दोऽङ्कुपं छन्दोऽक्षरपंक्तिश्छन्दः पदपंक्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरश्छन्दो भ्रजश्छन्दः सुखाय साध्नुत ॥ ४ ॥

**सपदार्थान्वयः**—हे **मनुष्याः! यूयं परमप्रयत्नेनैवः** ज्ञानं **छन्दः** आनन्दं, **वरिवः** सत्य-सेवनं **छन्दः** सुखप्रदं, **शम्भूः** सुखं भावुकः **छन्दः** आह्लादकारी व्यवहारः, **परिभूः** सर्वतः पुरुषार्थी **छन्दः** सत्यप्रदीपकः, **आच्छत्** दोषाऽपवारणं **छन्दः** ऊर्जनं, **मनः** संकल्पो विकल्पः **छन्दः** प्रकाशकरं, **व्यचः** शुभगुणव्याप्तिः **छन्दः** आनन्दकारि, **सिन्धुः** नदीव चलनं **छन्दः**, **समुद्रः** सागर इव गाम्भीर्य्यं **छन्दः** अर्थकरं, **सरिरं** जलमिव सरलता कोमलता **छन्दः** जलमिव शान्तिः, **ककुप्** दिगिव यशः **छन्दः** प्रतिष्ठाप्रदं, **त्रिककुप्** त्रीणि कानि=सुखानि स्कुभ्नाति येन कर्मणा तत् **छन्दः** आनन्दकरं, **काव्यं** कविभिर्निर्मितं **छन्दः** प्रकाशकं, **अङ्कुपं** अङ्कूनि=कुटिलानि गमनानि पाति=रक्षति तज्जलं **छन्दः** तृप्तिकरं कर्म, **अक्षरपङ्क्तिः** असौ च लोकः **छन्दः** आनन्दकरः, **पदपङ्क्तिः** अयं लोकः **छन्दः** सुखसाधकः, **विष्टारपङ्क्तिः** सर्वा दिशः **छन्दः** सुखसाधिकाः, क्षुरः क्षुर इव छेदक आदित्यः **छन्दः** विज्ञानं, **भ्रजः** दीप्तं **छन्दः** स्वच्छन्दाऽऽनन्द-करः **सुखाय साध्नुत** ॥ १५ । ४ ॥

**भाषार्थ**—हे मनुष्यो! तुम—परम प्रयत्न से—(एवः) ज्ञान रूप (छन्दः) आनन्द है, (वरिवः) सत्य का सेवन (छन्दः) सुखदायक है, (शम्भूः) सुख को उत्पन्न करने वाला (छन्दः) आह्लादकारी व्यवहार है, (परिभूः) सब ओर से पुरुषार्थी (छन्दः) सत्य का प्रकाशक है, (आच्छत्) दोष-निवारण रूप (छन्दः) बल है, (मनः) संकल्प, विकल्प (छन्दः) प्रकाश करने वाला है, (व्यचः) शुभगुणों की प्राप्ति (छन्दः) आनन्दकारक है, (सिन्धुः) नदी के समान गति (छन्दः) सुखदायक है, (समुद्रः) सागर के समान गम्भीरता (छन्दः) अर्थकारी है, (सरिरम्) जल के समान सरलता एवं कोमलता (छन्दः) शान्तिदायक है, (ककुप्) दिशा के समान यश (छन्दः) प्रतिष्ठा-प्रद है, (त्रिककुप्) तीन सुखों को स्थिर करने वाला कर्म (छन्दः) आनन्दकारक है, (काव्यम्) कवि-कृत काव्य (छन्दः) प्रकाशक है, (अङ्कुपम्) कुटिल गतियों का रक्षक जल (छन्दः) तृप्ति-कारक है, (अक्षर-पङ्क्तिः) परलोक (छन्दः) आनन्दकारक है, (पदपङ्क्तिः) यह लोक (छन्दः) सुख-साधक है, (विष्टारपङ्क्तिः) सब दिशाएँ (छन्दः) सुख-साधक हैं, (क्षुरः) खुर के समान छेदक सूर्य (छन्दः) विज्ञान है, (भ्रजः) प्रकाश (छन्दः) स्वच्छ और आनन्दकारक है, उसे सुख के लिए सिद्ध करो ॥

[हे मनुष्याः! यूयं परमप्रयत्नेनैवश्छन्दः···सुखाय साध्नुत]

**भावार्थः**—ये मनुष्या धर्म्यकर्मपुरुषार्था-नुष्ठानेन प्रिया भवन्ति, ते सर्वेभ्यः सृष्टिस्थ-पदार्थेभ्यः सुखानि संग्रहीतुं शक्नुवन्ति ॥ १५ । ४ ॥

**भावार्थ**—जो मनुष्य धर्मयुक्त कर्म तथा पुरुषार्थ के अनुष्ठान से प्रिय होते हैं वे सृष्टि के पदार्थों से सुखों को ग्रहण कर सकते हैं ॥

**भाष्यसार**—**सुखों को बढ़ाने के साधन**—सभी विद्वानों का मुख्य धर्म यह है कि वे

सुखों के साधनों से सदा सुखों को बढ़ावें। सुखों के साधन निम्नलिखित हैं:—(१) परम-पुरुषार्थ से ज्ञान प्राप्त करना। (२) मन, वचन, कर्म से असत्य व्यवहार का त्याग करना और परम सुखदायक और दोषों को दूर करने वाले सत्य का सेवन करना। (३) संकल्प-विकल्प करने वाले मन तथा अन्य इन्द्रियों को वश में करना। यह मन ही सुख-दुःख का मूल कारण है, नदी के समान निरन्तर गतिशील है। (४) समुद्र की तरह गम्भीरता भी सुखों को प्राप्त कराती है। गम्भीरता के अभाव में चंचलतादि दुःखों के कारण बन जाते हैं। (५) जल की तरह सरलता का होना परमावश्यक है। कुटिलतादि मन को दूषित करते हैं, सरलता से मन शुद्ध रहता है। (६) तीनों सुखों को प्राप्त कराने वाले कर्मों से और काव्य-प्रतिभा प्राप्त करके व्यापक कीर्त्ति को प्राप्त करना। (७) इस लोक के विज्ञान को, सब दिशाओं के विज्ञान को और सूर्य के विज्ञान को सीखकर सुखों के साधन बढ़ाना।

उपरोक्त साधनों से मनुष्य सांसारिक सुखों को प्राप्त करने में समर्थ हो सकते हैं॥ १५।४॥

परमेष्ठी। **विद्वांसः**=स्पष्टम्। भुरिगभिकृतिः। ऋषभः॥

**अथ मनुष्यैः प्रयत्नेन स्वातन्त्र्यं विधेयमित्याह॥**

मनुष्यों को चाहिए कि प्रयत्न के साथ स्वतन्त्रता बढ़ावें, यह उपदेश किया है॥

**आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप् छन्दोऽनुष्टुप् छन्दो ऽएवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छन्दो विशालं छन्दश्छदिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दो ऽअङ्काङ्कं छन्दः॥ ५॥**

**पदार्थः**—(**आच्छत्**) समन्तात् पापनिवारकं कर्म (**छन्दः**) प्रकाशनम् (**प्रच्छत्**) प्रयत्नेन दुष्टस्वभावदूरीकरणार्थं कर्म (**छन्दः**) उत्साहनम् (**संयत्**) संयमः (**छन्दः**) (**बलम्**) (**वियत्**) विविधैः प्रकारैर्यतते येन तत् (**छन्दः**) उत्साहः (**बृहत्**) महद्वर्धनम् (**छन्दः**) स्वातन्त्र्यम् (**रथन्तरम्**) यदस्मिन् लोके तारकं वस्त्वस्ति तत् (**छन्दः**) स्वीकरणम् (**निकायः**) निचिन्वन्ति=उपसमादधते येन वायुना तत् (**छन्दः**) स्वीकरणम् (**विवधः**) विशेषेण बध्नन्ति पदार्था यस्मिंस्तदन्तरिक्षम् (**छन्दः**) प्रकाशनम् (**गिरः**) गीर्यते=निगल्यते यदेनं तत् (**छन्दः**) स्वीकरणम् (**भ्रजः**) भ्राजते=प्रकाशते योऽग्निः सः (**छन्दः**) स्वीकरणम् (**संस्तुप्**) सम्यक् स्तुभ्नाति शब्दार्थसम्बन्धान् यया सा वाक् (**छन्दः**) आह्लादकारि (**अनुष्टुप्**) श्रुत्वा पश्चात् स्तुभ्नाति=जानाति शास्त्राणि यया मननक्रियया सा (**छन्दः**) उपदेशः (**एवः**) प्रापणम् (**छन्दः**) प्रयतनम् (**वरिवः**) विद्वत्परिचरणम् (**छन्दः**) स्वीकरणम् (**वयः**) जीवनम् (**छन्दः**) स्वाधीनम् (**वयस्कृत्**) यद्वयस्करोति तज्जीवनसाधनम् (**छन्दः**) स्वीकरणम् (**विष्पर्द्धाः**) विशेषेण यः स्पर्ध्यते सः (**छन्दः**) प्रदीपनम् (**विशालम्**) विस्तीर्णं कर्म (**छन्दः**) परिग्रहणम् (**छदिः**) विघ्नापवारणम् (**छन्दः**) सुखावहम् (**दूरोहणम्**) दुःखेन रोढुमर्हम् (**छन्दः**) ऊर्जनम् (**तन्द्रम्**) स्वतन्त्रताकरणम् (**छन्दः**) प्रकाशनम् (**अङ्काङ्कम्**) गणितविद्या (**छन्दः**) संस्थापनम्॥ ५॥

**अन्वयः**—मनुष्यैराच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरं छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः संस्तुप्छन्दोऽनुष्टुप्छन्दः एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छन्दो विशालं छन्दश्छदिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दोऽङ्काङ्कं छन्दः-स्वीकृत्य प्रचाराय प्रयतितव्यम्॥ ५॥

**सपदार्थान्वयः** — मनुष्यैराच्छत् समन्तात् पापनिवारकं कर्म **छन्दः** प्रकाशनं, **प्रच्छत्** प्रयत्नेन दुष्टस्वभावदूरीकरणार्थं कर्म **छन्दः** उत्साहनं **संयत्** संयमः **छन्दः**, **वियत्** विविधैः प्रकारैर्यतते येन तत् **छन्दः** उत्साहो, **बृहत्** महद्वर्धनं **छन्दः** स्वातन्त्र्यं, **रथन्तरं** यदस्मिन् लोके तारकं वस्त्वस्ति तत् **छन्दः** स्वीकरणं, **निकायः** निचिन्वन्ति=उपसमादधते येन वायुना तत् **छन्दः** स्वीकरणं, **विवधः** विशेषेण बध्नन्ति पदार्था यस्मिंस्तदन्तरिक्षं **छन्दः** प्रकाशनं, **गिरः** गीर्यते=निगल्यते यदेनं तत् **छन्दः** स्वीकरणं, **भ्रजः** भ्राजते=प्रकाशते योऽग्निः सः, **छन्दः** स्वीकरणं **संस्तुप्** सम्यक् स्तुभ्नाति शब्दार्थसम्बन्धान् यया सा वाक् **छन्दः** आह्लादकारि, **अनुष्टुप्** श्रुत्वा पश्चात् स्तुभ्नाति=जानाति शास्त्राणि यया मननक्रियया सा **छन्दः** उपदेशः, **एवः** प्रापणं **छन्दः** प्रयतनं, **वरिवः** विद्वत्परिचरणं **छन्दः** स्वीकरणं, **वयः** जीवनं **छन्दः** स्वाधीनं, **वयस्कृत्** यद्वयस्करोति तज्जीवनसाधनं **छन्दः** स्वीकरणं, **विष्पर्द्धाः** विशेषेण यः स्पर्ध्यते सः **छन्दः** प्रदीपनं, **विशालं** विस्तीर्णं कर्म **छन्दः** परिग्रहणं, **छदिः** विघ्नापवारणं **छन्दः** सुखावहं, **दूरोहणं** दुःखेन रोढुमर्हं **छन्दः** ऊर्जनं, **तन्द्रं** स्वतन्त्रताकरणं **छन्दः** प्रकाशनं, **अङ्काङ्कं** गणितविद्या **छन्दः** संस्थापनं **स्वीकृत्य प्रचाराय प्रयतितव्यम्** ॥ १५ । ५ ॥

**भाषार्थ**—मनुष्य—(आच्छत्) सब ओर से पाप-निवारक कर्म (छन्दः) प्रकाश है, (प्रच्छत्) प्रयत्न से दुष्ट स्वभाव को दूर करने के लिए कर्म करना (छन्दः) उत्साह है, (संयत्) संयम (छन्दः) उत्साह है, (वियत्) विविध प्रकार से यत्न करना (छन्दः) उत्साह है, (बृहत्) महान् वृद्धि (छन्दः) स्वतन्त्रता है, (रथन्तरम्) इस लोक में पार करने वाली वस्तु (छन्दः) स्वीकार के योग्य है, (निकायः) संयोग का हेतु वायु (छन्दः) स्वीकार के योग्य है, (विवधः) विशेष रूप से पदार्थों का बन्धन-स्थान अन्तरिक्ष (छन्दः) प्रकाश है, (गिरः) निगलने योग्य अन्न आदि (छन्दः) स्वीकार के योग्य हैं, (भ्रजः) प्रकाश करने वाला अग्नि (छन्दः) स्वीकार के योग्य है, (संस्तुप्) शब्द, अर्थ और सम्बन्ध को उत्तमता से स्थिर करने वाली वाणी (छन्दः) आह्लादकारी है, (अनुष्टुप्) सुनने के पश्चात् शास्त्रों को जानने का साधन मनन (छन्दः) उपदेश है, (एवः) प्राप्त करना-कराना (छन्दः) प्रयत्न है, (वरिवः) विद्वानों की परिचर्या=सेवा (छन्दः) स्वीकार के योग्य है, (वयः) जीवन (छन्दः) स्वाधीनता है, (वयस्कृत्) वयः=आयु को बढ़ाने वाले जीवन-साधन (छन्दः) स्वीकार के योग्य हैं, (विष्पर्द्धाः) विशेष स्पर्द्धा के योग्य (छन्दः) प्रकाश है, (विशालम्) विस्तृत कर्म (छन्दः) परिग्रह= स्वीकार के योग्य है, (छदिः) विघ्नों को हटाना (छन्दः) सुख-प्रापक है, (दूरोहणम्) कठिनता से बढ़ने वाला (छन्दः) बल है, (तन्द्रम्) स्वतन्त्रता प्राप्त करना (छन्दः) प्रकाश है, (अङ्काङ्कम्) गणित विद्या (छन्दः) संस्थापन के योग्य है, इनको स्वीकार करके इनके प्रचार के लिए प्रयत्न करें ॥ १५ । ५ ॥

[ मनुष्यैः···बृहच्छन्दः···स्वीकृत्य···प्रयतितव्यम् ]

**भावार्थः**—मनुष्यैः पुरुषार्थेन पारतन्त्र्य-हानिः स्वातन्त्र्यस्वीकरणं सततं विधेयम् ॥ १५ ॥

**भावार्थ**—मनुष्य—पुरुषार्थ से परतन्त्रता की हानि और स्वतन्त्रता को सदा स्वीकार करें।

**भाष्यसार**—**स्वतन्त्रता की रक्षा करना परमपुरुषार्थ**—संसार में स्वतन्त्रता मनुष्यों का परम सुख है। अतः सभी प्रयत्नों से इसकी रक्षा करनी चाहिए। किन्तु उच्छृङ्खलता का नाम स्वतन्त्रता नहीं है। पापों से दूर रहकर दुष्ट-स्वभाव को त्यागना और मन व इन्द्रियों को वश में करके उत्साह प्राप्त करना ही स्वतन्त्रता है। इससे निरन्तर उन्नति, सांसारिक दुःखों से मुक्ति मिलती है। स्वतन्त्रता प्राप्त

मनुष्य वायु की तरह सर्वत्र गति वाले होकर विज्ञान की सहायता से अनन्त अन्तरिक्ष में गमनागमन कर सकते हैं और अग्नि के समान शब्दार्थ के सम्बन्धों वाली विद्या के प्रकाश से परमानन्द को प्राप्त करते हैं। श्रवण के पश्चात् शिक्षा-प्राप्ति के दूसरे साधन रूप मनन को स्वतन्त्र मनुष्य ही कर सकते हैं। विद्वानों की सेवा, विद्याबल की वृद्धि, आयु-बढ़ाने वाले साधनों में स्पर्द्धा-प्रवृत्ति, विस्तृत शुभ कार्यों से विघ्नों का विनाश करके सुखों की वृद्धि बिना स्वतन्त्रता के कभी नहीं हो सकती। अतः उपरोक्त गुणों की प्राप्ति के लिए स्वतन्त्रता की रक्षा करना बहुत आवश्यक है॥ १५। ५॥

परमेष्ठी। **विद्वांसः**=स्पष्टम्। विराडभिकृतिः। ऋषभः॥

**अथ विद्वद्भिः पदार्थविद्या ज्ञातव्येत्याह॥**

विद्वानों को पदार्थविद्या के जानने का उपाय करना चाहिए, यह उपदेश किया है॥

**रश्मिना॑ स॒त्याय॑ स॒त्यं जि॑न्व॒ प्रेति॑ना॒ धर्म्म॑णा॒ धर्मं॑ जि॒न्वान्वि॑त्या दि॒वा दिवं॑ जिन्व स॒न्धिना॒न्तरि॑क्षेणा॒न्तरि॑क्षं जिन्व प्रति॒धिना॑ पृथि॒व्या पृ॑थि॒वीं जि॑न्व विष्ट॒म्भेन॒ वृष्ट्या॒ वृष्टिं॑ जिन्व प्र॒वयाऽह्नाह॑र्जिन्वानु॒या रात्र्या॒ रात्रीं॑ जिन्वो॒शिजा॒ वसु॑भ्यो॒ वसू॑न् जिन्व प्रके॒तेना॑दि॒त्येभ्य॑ऽ आदि॒त्याञ्जि॑न्व॥ ६॥**

**पदार्थः**—(**रश्मिना**) किरणसमूहेन (**सत्याय**) सति=वर्त्तमाने भवाय स्थूलाय पदार्थसमूहाय (**सत्यम्**) अव्यभिचारि कर्म (**जिन्व**) प्राप्नुहि (**प्रेतिना**) प्रकृष्टविज्ञानयुक्तेन (**धर्मणा**) न्यायाचरणेन (**धर्मम्**) (**जिन्व**) जानीहि (**अन्वित्या**) अन्वेषणेन (**दिवा**) धर्मप्रकाशेन (**दिवम्**) सत्यप्रकाशम् (**जिन्व**) (**सन्धिना**) सन्धानेन (**अन्तरिक्षेण**) आकाशेन (**अन्तरिक्षम्**) अवकाशम् (**जिन्व**) जानीहि (**प्रतिधिना**) प्रतिदधाति यस्मिस्तेन (**पृथिव्या**) भूगर्भविद्यया (**पृथिवीम्**) भूमिम् (**जिन्व**) जानीहि (**विष्टम्भेन**) विशेषेण स्तभ्नोति शरीरं येन तेन (**वृष्ट्या**) वृष्टिविद्यया (**वृष्टिम्**) (**जिन्व**) जानीहि (**प्रवया**) कान्तिमता (**अह्ना**) अहर्विद्यया (**अहः**) दिनम् (**जिन्व**) जानीहि (**अनुया**) यानुयाति तया (**रात्र्या**) रात्रिविद्यया (**रात्रीम्**) रजनीम् (**जिन्व**) (**उशिजा**) कामयमानेन (**वसुभ्यः**) अग्न्यादिभ्यः (**वसून्**) अग्न्यादीन् (**जिन्व**) (**प्रकेतेन**) प्रकृष्टेन विज्ञानेन (**आदित्येभ्यः**) मासेभ्यः (**आदित्यान्**) द्वादशमासान् (**जिन्व**) विजानीहि॥ ६॥

**अन्वयः**—हे विद्वंस्त्वं रश्मिना सत्याय सूर्य इव नित्यसुखाय सत्यं जिन्व प्रेतिना धर्मणा धर्मं जिन्व। अन्वित्या दिवा दिवं जिन्व। सन्धिनान्तरिक्षेणान्तरिक्षं जिन्व। पृथिव्या प्रतिधिना पृथिवीं जिन्व विष्टम्भेन वृष्ट्या वृष्टिं जिन्व प्रवयाऽह्नाहर्जिन्व। अनुया रात्र्या रात्रीं जिन्वोशिजा वसुभ्यो वसून् जिन्व प्रकेतेनादित्येभ्य आदित्यान् जिन्व॥ ६॥

**सपदार्थान्वयः**--हे विद्वन्! त्वं **रश्मिना** किरणसमूहेन **सत्याय**=सूर्य इव नित्यसुखाय सति=वर्त्तमाने भवाय स्थूलाय पदार्थसमूहाय **सत्यम्** अव्यभिचारि कर्म **जिन्व** प्राप्नुहि, **प्रेतिना** प्रकृष्टविज्ञानयुक्तेन **धर्मणा** न्यायाचरणेन **धर्मं जिन्व** जानीहि, **अन्वित्या** अन्वेषणेन **दिवा** धर्मप्रकाशेन **दिवं** सत्यप्रकाशं **जिन्व** प्राप्नुहि, **सन्धिना** सन्धानेन

**भावार्थ**—हे विद्वान् तू—(रश्मिना) किरण समूह से (सत्याय) सूर्य के समान नित्य सुख की तथा स्थूल पदार्थों की प्राप्ति के लिए (सत्यम्) सत्य-अव्यभिचारी कर्म को (जिन्व) प्राप्त कर, (प्रेतिना) उत्तम विज्ञान से युक्त (धर्मणा) न्यायाचरण से (धर्मम्) धर्म को (जिन्व) प्राप्त कर, (अन्वित्या) अन्वेषण खोज के योग्य (दिवा) धर्म-प्रकाश से

ऽजनिष्टौषधीनामपां पिता हि द्वितीयो यो गर्भं व्यदधात् स पुरुत्रा जनिता पर्जन्यः तृतीयोऽभवदिति भवन्तो विदन्तु ॥ ३२ ॥

**सपदार्थान्वयः**—हे मनुष्याः । **अत्र जगति विश्वकर्मा** विश्वानि=सर्वाणि शुभानि कर्माणि यस्य स **देवः**=**वायुः** दिव्यस्वरूप **आदिम इदभवद्** भवति ।

**आत्**=**अनन्तरं गन्धर्वः** मां=पृथिवीं धरति स सूर्यः सूत्रात्मा वायुर्वा **अजनिष्ट** जनितवान्,

**ओषधीनां** यवादीनाम् **अपां** जलानां प्राणानां वा **पिता** पालकः **हि** खलु **द्वितीयः** द्वयोः संख्यापूरको धनञ्जयो **यो गर्भं** धारणं **व्यदधात्** दधाति ।

**स पुरुत्रा** यः पुरून्=बहून् त्रायते सः **जनिता**=**पर्जन्यः** प्रसिद्धिकर्त्ताऽपां धर्त्ता पर्जन्यः **तृतीयः** त्रयाणां संख्यापूरकः प्राणादिस्वरूपः **अभवद्** भवति **इति भवन्तो विदन्तु** ॥ १७ । ३२ ॥

**भाषार्थ**—हे मनुष्यो ! इस जगत् में (विश्वकर्मा) सब शुभ कर्मों वाला (देवः) दिव्य स्वरूप वाला आत्मा आदिम (इत्) ही (अभवत्) है ।

(आत्) तत्पश्चात् (गन्धर्वः) पृथिवी को धारण करने वाला सूर्य वा सूक्ष्म वायु (अजनिष्ट) पैदा हुआ ।

(ओषधीनाम्) जौ आदि ओषधियों (अपाम्) जल वा प्राणों का (पिता) पालक (हि) ही (द्वितीयः) दूसरा धनञ्जय है जो (गर्भम्) धारण-शक्ति को (व्यदधात्) धारण कर रहा है ।

वह—(पुरुत्रा) बहुतों का पालक, (जनिता) प्रसिद्धि-कर्त्ता एवं जलों को धारण करने वाला बादल (तृतीय) तीसरा प्राण आदि स्वरूप है, ऐसा आप जानो ॥ १७ । ३२ ॥

**[हे मनुष्याः ! अत्र जगति विश्वकर्मा देवो आदिम इदभवद्]**

**भावार्थः**—सर्वैर्मनुष्यैरिह सकलकर्मसेवका जीवाः प्रथमाः,

**भावार्थ**—सब मनुष्य इस जगत् में सब कर्मों का सेवन करने वाले जीवों को प्रथम,

**[आत्=अनन्तरं गन्धर्वो ऽजनिष्ट, ओषधीनामपां पिता हि द्वितीयः, यो गर्भं व्यदधात्]**

विद्युत्-अग्नि-सूर्य-वायवः पृथिव्यादिधारका द्वितीयाः,

पृथिवी आदि को धारण करने वाले विद्युत्, अग्नि, सूर्य और वायु को द्वितीय,

**[स···जनिता=पर्जन्यस्तृतीयो ऽभवदिति भवन्तो विदन्तु]**

तृतीयाः पर्जन्यादयस्तेषां जीवा अजा, अन्ये सर्वे जाताः, तेऽपि कारणरूपेण नित्याश्चेति वेद्यम् ॥ १७ । ३२ ॥

और पर्जन्य=बादल आदि को तृतीय समझें । इनमें जीव अजन्मा हैं अन्य सब उत्पन्न हुए हैं । वे भी कारण रूप से नित्य हैं ऐसा समझें ॥

**भा० पदार्थः**—विश्वकर्मा=सकलकर्मसेवकः । देवः=जीवः । गन्धर्वः=विद्युत्, अग्निः, सूर्यः, वायुः । जनिता=पर्जन्यादि ॥

**भाष्यसार**—**परमेश्वर की सृष्टि का रचनाक्रम**—दिव्य स्वरूप, विश्वकर्मा परमात्मा जगत् में प्रथम विद्यमान रहता है, तत्पश्चात् पृथिवी को धारण करने वाले सूर्य और वायु पैदा हुए । तत्पश्चात् ओषधियों का जलों का, तथा प्राणों का पालक और धारण-शक्ति वाला धनञ्जय पैदा हुआ । तत्पश्चात् अन्नादि के उत्पादक होने से सबके पालक, जलों को धारण करने वाले मेघ पैदा हुए ॥ १७ । ३२॥

अप्रतिरथः । **इन्द्रः**=सेनापतिः । आर्षी त्रिष्टुप् । धैवतः ॥

**अथ सेनापतिकृत्यमुपदिश्यते ॥**

अब सेनापति के कृत्य का उपदेश किया जाता है ॥

**आ॒शुः शिशा॑नो वृष॒भो न भी॒मो घ॑नाघ॒नः क्षोभ॑णश्चर्षणी॒नाम् ।**
**सं॒क्रन्द॑नोऽनिमि॒ष ऽ एक॑वी॒रः श॒तꣳ सेना॑ ऽ अजयत्सा॒कमिन्द्रः॑ ॥ ३३ ॥**

**पदार्थः**—(**आशुः**) शीघ्रकारी (**शिशानः**) तनूकर्त्ता (**वृषभः**) बलीवर्दः (न) इव (**भीमः**) भयंकरः (**घनाघनः**) अतिशयेन शत्रून् घातुकः । **हन्तेर्घत्वं चेति वार्त्तिकेनाचि प्रत्यये घत्वमभ्यासस्यागमश्च** (**क्षोभणः**) क्षोभकर्त्ता=संचालयिता (**चर्षणीनाम्**) मनुष्याणां तत्सम्बन्धिसेनानां वा । **चर्षणय इति मनुष्यना० ॥ निघं० २ । ३ ॥** (**संक्रन्दनः**) सम्यक् शत्रूणां रोदयिता (**अनिमिषः**) अहर्निशं प्रयतमानः (**एकवीरः**) एकश्चासौ वीरश्च (**शतम्**) असंख्याः (**सेनाः**) सिन्वन्ति=बध्नन्ति शत्रून् याभिस्ताः (**अजयत्**) जयति (**साकम्**) सार्द्धम् (**इन्द्रः**) शत्रूणां विदारयिता सेनेशः ॥ ३३ ॥

**प्रमाणार्थ**—(**घनाघनः**) यहाँ 'हन्तेर्घत्वं च' इस वार्त्तिक से अच् प्रत्यय करने पर 'घत्व' और अभ्यास को 'आक्' आगम है । (**चर्षणयः**) 'चर्षणयः' पद निघं० २ । ३ में मनुष्य-नामों में पठित है ॥

**अन्वयः**—हे विद्वांसः ! मनुष्या यूयं यश्चर्षणीनामाशुः शिशानो वृषभो ना भीमो घनाघनः क्षोभणः संक्रन्दनोऽनिमिष एकवीर इन्द्रोऽस्माभिः साकं शतं सेना अजयत् तमेव सेनाधीशं कुरुत ॥ ३३ ॥

**सपदार्थान्वयः**—**हे विद्वांसो मनुष्याः! यूयं यश्चर्षणीनां** मनुष्याणां तत्सम्बन्धिसेनानां वा **आशुः** शीघ्रकारी, **शिशानः** तनूकर्त्ता, **वृषभः** बलीवर्दः **न** इव **भीमः** भयङ्करः **घनाघनः** अतिशयेन शत्रून् घातुकः **क्षोभणः** क्षोभकर्त्ता=संचालयिता, **संक्रन्दनः** सम्यक् शत्रूणां रोदयिता, **अनिमिषः** अहर्निशं प्रयतमानः, **एकवीरः** एकश्चासौ वीरश्च **इन्द्रः** शत्रूणां विदारयिता सेनेशः **अस्माभिः साकं** सार्द्धं **शतम्** असंख्याः **सेनाः** सिन्वन्ति बध्नन्ति शत्रून् याभिस्ताः **अजयत्** जयति, **तमेव सेनाधीशं कुरुत** ॥ १७ । ३३ ॥

**भाषार्थ**—हे विद्वान् मनुष्यो ! तुम—जो (चर्षणीनाम्) मनुष्यों वा उनसे सम्बन्धित सेनाओं को (आशुः) शीघ्र बनाने वाला, (शिशानः) पदार्थों को सूक्ष्म करने वाला, (वृषभः) बैल के (न) समान (भीमः) भयंकर, (घनाघनः) अत्यन्त शत्रुओं का घातक, (क्षोभणः) संचालक, (संक्रन्दनः) शत्रुओं को सम्यक् रुलाने वाला (अनिमिषः) दिन-रात प्रयत्न करने वाला, (एकवीरः) एक वीर (इन्द्रः) शत्रुओं का विदारक सेनापति हमारे (साकम्) साथ (शतम्) असंख्य (सेनाः) शत्रुओं को बांधने वाली सेनाओं को (अजयत्) जीतता है; उसे ही सेनापति बनाओ ॥ १७ । ३३ ॥

[हे ··· **मनुष्याः ! यूयं यः···वृषभो न भीमः,···इन्द्रोऽस्माभिः साकं शतं सेना अजयत्, तमेव न्यायाधीशं कुरुत**]

**भावार्थः**—मनुष्यैः—यो धनुर्वेदविद्, ऋग्वेदादिविद्, निर्भयः, सर्वविद्यः, बलिष्ठः, धार्मिकः, स्वराज्यानुरागी, जितेन्द्रियः, अरीणां विजेता, स्वसेनायाः शिक्षणे योधने च कुशलो वीरो भवेत्; स सेनाधीशाधिकारे स्थापनीयः ॥१७।३३॥

**भावार्थ**—मनुष्य—जो धनुर्वेद का वेत्ता, ऋग्वेद आदि का ज्ञाता, निर्भय, सब विद्याओं से युक्त, बलिष्ठ, धार्मिक, स्वराज्य का अनुरागी, जितेन्द्रिय, शत्रुओं का विजेता, अपनी सेना के शिक्षण और युद्ध कराने में कुशल वीर हो उसे सेनापति के अधिकार पर स्थापित करें ॥१७।३३॥

**भा० पदार्थः**—वृषभः=बलिष्ठः ॥

**भाष्यसार**—सेनापति कैसा हो ?—एकमात्र वीर, निरन्तर प्रयत्न करके शत्रु-सेनाओं को पराजित करने वाला तथा रुलाने वाला, आलस्य रहित होकर शीघ्र कार्य करने वाला, बैल की तरह भयानक, दुष्टों का घातक, अपनी सेनाओं का भली-भांति सञ्चालन करने वाला, और पदार्थों को बुद्धि-चातुर्य से सूक्ष्म करने वाला व्यक्ति सेनापति बनने का अधिकारी होता है ॥ १७ । ३३ ॥

अप्रतिरथः । **इन्द्रः**=**सेनापतिः** । स्वराडार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।**
**तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ ३४ ॥**

**पदार्थः**—(**संक्रन्दनेन**) सम्यग् दुष्टानां रोदयित्रा (**अनिमिषेण**) निरन्तरं प्रयतमानेन (**जिष्णुना**) जयशीलेन (**युत्कारेण**) यो व्यूहैर्युतो=मिश्रितानमिश्रितान् भृत्यान् करोति तेन (**दुश्च्यवनेन**) यः शत्रुभिर्दुःखेन=कृच्छ्रेण च्यवते तेन (**धृष्णुना**) दृढोत्साहेन (**तत्**) तेन पूर्वोक्तेन (**इन्द्रेण**) परमैश्वर्य्यकारकेण (**जयत**) (**तत्**) शत्रुसैन्यं युद्धजन्यं दुःखं वा (**सहध्वम्**) (**युधः**) ये युध्यन्ते ते (**नरः**) नायकाः (**इषुहस्तेन**) इषवः=शस्त्राणि हस्तयोर्यस्य तेन (**वृष्णा**) वीर्यवता ॥ ३४ ॥

**अन्वयः**—हे युधो नरः ! यूयमनिमिषेण दुश्च्यवनेन धृष्णुना युत्कारेण वृष्णेषुहस्तेन संक्रन्दनेन जिष्णुना तत्तेनेन्द्रेण सह वर्त्तमानाः सन्तः शत्रून् जयत तच्छत्रुसैन्यवेगं सहध्वम् ॥ ३४ ॥

**सपदार्थान्वयः**—हे **युधः** ये युध्यन्ते ते **नरः** ! नायकाः ! **यूयमनिमिषेण** निरन्तरं प्रयतमानेन **दुश्च्यवनेन** यः शत्रुभिर्दुःखेन=कृच्छ्रेण च्यवते तेन **धृष्णुना** दृढोत्साहेन **युत्कारेण** यो व्यूहैर्युतो=मिश्रितानमिश्रितान् भृत्यान् करोति तेन **वृष्णा** वीर्यवता **इषुहस्तेन** इषवः=शस्त्राणि हस्तयोर्यस्य तेन **संक्रन्दनेन** सम्यग् दुष्टानां रोदयित्रा **जिष्णुना** जयशीलेन **तत्**=**तेन** तेन पूर्वोक्तेन **इन्द्रेण** परमैश्वर्य्यकारकेण **सह वर्त्तमानाः सन्तः शत्रून् जयत**, **तत्**=शत्रुसैन्यवेगं शत्रुसैन्यं युद्धजन्यं दुःखं वा **सहध्वम्** ॥ १७ । ३४ ॥

**भाषार्थ**—हे (युधः) युद्ध करने वाले (नरः) मनुष्यो ! तुम—(अनिमिषेण) निरन्तर प्रयत्न करने वाले, (दुश्च्यवनेन) शत्रुओं को दुःख पहुँचाने वाले, (धृष्णुना) दृढ़ उत्साही, (युत्कारेण) व्यूहों से युक्त होकर भृत्यों को मिश्रित और अमिश्रित करने वाले, (वृष्णा) वीर्यवान्, (इषुहस्तेन) दोनों हाथों में शस्त्र धारण करने वाले, (संक्रन्दनेन) दुष्टों को सम्यक् रुलाने वाले, (जिष्णुना) जयशील (तत्) उस पूर्वोक्त (इन्द्रेण) परम ऐश्वर्य को उत्पन्न करने वाले सेनापति के साथ वर्त्तमान रह कर शत्रुओं को जीतो और (तत्) उस शत्रुसेना वा युद्धजन्य दुःख को (सहध्वम्) सहन करो ॥ १७ । ३४ ॥

[हे युधो नरः ! यूयं ···युत्कारेण, वृष्णा, इषुहस्तेन, इन्द्रेण सह वर्तमानाः सन्तः शत्रून् जयत]

**भावार्थः**—हे मनुष्याः ! यूयं युद्धविद्याकुशलं, सर्वशुभलक्षणान्वितं, बलपराक्रमाढ्यं, जनं

**भावार्थ**—हे मनुष्यो ! तुम—युद्ध-विद्या में कुशल, सब शुभ लक्षणों से युक्त, बल और

सर्वाधिष्ठातारं कृत्वा, तेन सहाधार्मिकान् शत्रून् जित्वा, — पराक्रम से भरपूर पुरुष को सबका अधिष्ठाता बनाकर, उसके साथ अधार्मिक शत्रुओं को जीत कर,

[तत्=शत्रुसैन्यवेगं सहध्वम्]

निष्कण्टकं चक्रवर्त्ति राज्यं संभुङ्ग्ध्वम् ॥ — निष्कण्टक, चक्रवर्त्ती राज्य को भोगो ॥

**भा० पदार्थः**—युत्कारेण=युद्धविद्याकुशलेन । वृष्णा=बलाढ्येन । इषुहस्तेन=पराक्रमाढ्येन ।

**भाष्यसार**—**सेनापति कैसा हो ?**—स्वकर्त्तव्यों में दृढ़, उत्साही, विजयशील, वीर्यवान्, परमैश्वर्य को उत्पन्न करने वाले, अपने सेनाओं को व्यूह रूप में करके शत्रुओं को दुःख देने वाले, दोनों हाथों में शस्त्र लेकर शत्रुओं को रुलाने वाले और युद्ध कला में निपुण व्यक्ति को सेनापति बनाना चाहिए ॥ १७ । ३४ ॥

अप्रतिरथः । **इन्द्रः=सेनापतिः** । आर्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**स ऽ इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध ऽ इन्द्रो गणेन ।**
**सꣳसृष्टजित् सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३५ ॥**

**पदार्थः**—(**सः**) सेनापतिः (**इषुहस्तैः**) शस्त्रपाणिभिः सुशिक्षितैर्बलिष्ठैर्भृत्यैः (**सः**) (**निषङ्गिभिः**) निषङ्गाणि=भुशुण्डीशतघ्न्याग्नेयास्त्रादीनि बहूनि विद्यन्ते येषां तैः (**वशी**) जितेन्द्रियान्तःकरणः (**संस्रष्टा**) श्रेष्ठानां मनुष्याणां शस्त्रास्त्राणां वा संसर्गस्य कर्त्ता (**सः**) (**युधः**) यो युध्यते सः (**इन्द्रः**) शत्रूणां दारयिता (**गणेन**) सुशिक्षितभृत्यसमूहेन सैन्येन वा (**संसृष्टजित्**) यः संसृष्टान्=मिलिताञ्छत्रूञ्जयति सः (**सोमपाः**) यः सोममोषधिरसं पिबति सः (**बाहुशर्द्धी**) बाह्वोः शर्द्धी=बलं यस्य सः (**उग्रधन्वा**) उग्रं धनुर्यस्य (**प्रतिहिताभिः**) प्रत्यक्षेण धृताभिः (**अस्ता**) शस्त्रास्त्राणां प्रक्षेप्ता ॥ १७ । ३५ ॥

**अन्वयः**—स सेनापतिरिषुहस्तैर्निषङ्गिभिः सह वर्त्तमानः स संस्रष्टा वशी संसृष्टजित् सोमपा बाहुशर्द्ध्युग्रधन्वा स युधोऽस्तेन्द्रो गणेन प्रतिहिताभिश्च सह वर्त्तमानः सन् शत्रूञ्जयतु ॥ १७ । ३५ ॥

**सपदार्थान्वयः**—**सः**=सेनापतिरिषु**हस्तैः** शस्त्रपाणिभिः सुशिक्षितैर्बलिष्ठैर्भृत्यैः **निषङ्गिभिः** निषङ्गाणि=भुशुण्डीशतघ्न्याग्नेयास्त्रादीनि बहूनि विद्यन्ते येषां तैः **सह वर्त्तमानः**; स **संस्रष्टा** श्रेष्ठानां मनुष्याणां शस्त्रास्त्राणां वा संसर्गस्य कर्त्ता **वशी** जितेन्द्रियान्तःकरणः **संसृष्टजित्** यः संसृष्टान्=मिलिताञ्छत्रूञ्जयति सः **सोमपा** यः सोममोषधिरसं पिबति स **बाहुशर्द्धी** बाह्वोः शर्द्धी=बलं यस्य स **उग्रधन्वा** उग्रं धनुर्यस्य; **स युधः** यो

**भाषार्थ**—(सः) वह सेनापति (इषुहस्तैः) शस्त्र हाथ में रखने वाले, सुशिक्षित, बलिष्ठ, (निषङ्गिभिः) निषङ्ग अर्थात् भुशुण्डी=बन्दूक, शतघ्नी=तोप आदि बहुत आग्नेय अस्त्रों वाले भृत्यों के साथ विद्यमान, (सः) वह (संस्रष्टा) श्रेष्ठ मनुष्यों वा शस्त्र-अस्त्रों का संसर्ग करने वाला, (वशी) इन्द्रियों और अन्तःकरण को वश में रखने वाला, (संसृष्टजित्) संसृष्ट=मिले हुए शत्रुओं को जीतने वाला, (सोमपाः) सोम=ओषधि-रस का

युध्यते सः **अस्ता** शस्त्रास्त्राणां प्रक्षेप्ता **इन्द्रः** शत्रूणां दारयिता **गणेन** सुशिक्षितभृत्यसमूहेन सैन्येन वा **प्रतिहिताभिः** प्रत्यक्षेण धृताभिः **च सह वर्त्तमानः सन् शत्रूञ्जयतु** ॥ १७ । ३५ ॥

पान करने वाला (बाहुशर्द्धी) बाहुओं में बल वाला (उग्रधन्वा) उग्र धनुष वाला, (स) वह (युधः) युद्ध करने वाला, (अस्ता) शस्त्र-अस्त्रों को चलाने वाला (इन्द्रः) शत्रुओं का विदारक सेनापति (गणेन) सुशिक्षित भृत्यों वा सेनाओं और (प्रतिहिताभिः) प्रत्यक्ष धारण की हुई सेनाओं के साथ वर्तमान होकर शत्रुओं को जीते ॥ १७ । ३५ ॥

**[सः=सेनापतिरिषुहस्तैर्निषङ्गिभिः सह वर्तमानः······इन्द्रो गणेन······सह······शत्रूञ्जयतु]**

**भावार्थः**—सर्वेशो राजा सर्वसेनाधिपतिर्वा सुशिक्षितवीरभृत्यसेनया सह वर्तमानो दुर्जयानपि शत्रून् जेतुं यथा शक्नुयात्, तथा सर्वैर्विधेयम् ॥

**भावार्थ**—सब का ईश राजा वा सब सेनाओं का अधिपति सुशिक्षित वीर-भृत्यों एवं सेना के साथ वर्तमान होकर दुर्जय शत्रुओं को जैसे जीत सके वैसा सब आचरण करें ॥ १७ । ३५ ॥

**भा० पदार्थः**—इषुहस्तैः=सुशिक्षितभृत्यसेनाभिः । निषङ्गिभिः=सुशिक्षितवीरसेनाभिः । इन्द्रः=सर्वेशो राजा सर्वसेनाधिपतिर्वा ॥ १७ । ३५ ॥

**भाष्यसार**—**सेनापति कैसा हो ?**—शस्त्रास्त्र चलाने में प्रशिक्षित, जितेन्द्रिय, सोम का पान करने वाला, बलवान्, उग्र धनुष वाला, शत्रुओं का संहारक और युद्ध विद्या में चतुर सेनाओं से युक्त वीर मनुष्य सेनापति होना चाहिए ॥ १७ । ३५ । ●

अप्रतिरथः । **इन्द्रः=सेनापतिः** । आर्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**बृह॑स्पते॒ परि॑ दीया॒ रथे॑न रक्षो॒हामित्राँ॑२ऽ अप॒बाध॑मानः ।**
**प्र॒भ॒ञ्जन्त्सेनाः॑ प्रमृ॒णो यु॒धा जय॑न्न॒स्माक॑मेध्यवि॒ता रथा॑नाम् ॥ ३६ ॥**

**पदार्थः**—(**बृहस्पते**) बृहतां=धार्मिकाणां वृद्धानां सेनानां वा पतिस्तत्संबुद्धौ (**परि**) सर्वतः (**दीया**) क्षिणुहि । **अत्र द्व्यचोऽतस्तिङ इति दीर्घः । अत्र व्यत्ययेनात्मनेपदम्** (**रथेन**) रमणीयेन यानसमूहेन (**रक्षोहा**) यो रक्षांसि=दुष्टान् हन्ति सः (**अमित्रान्**) न विद्यन्ते मित्राण्येषां तान् (**अपबाधमानः**) अपबाधते सः (**प्रभञ्जन्**) यः प्रभग्नान् करोति सः (**सेनाः**) (**प्रमृणः**) ये प्रकृष्टतया मृणन्ति=हिंसन्ति तान् (**युधा**) युद्धे (**जयन्**) उत्कर्षं प्राप्नुवन् (**अस्माकम्**) (**एधि**) भव (**अविता**) रक्षिता (**रथानाम्**) रमणीयानां यानानाम् ॥ १७ । ३६ ॥

**प्रमाणार्थ**—(**दीया**) यहाँ 'द्व्यचोऽतस्तिङ' (६ । ३ । १३५) से दीर्घ है तथा व्यत्यय से आत्मनेपद है ॥

**अन्वयः**—हे बृहस्पते ! यो रक्षोहाऽमित्रानपबाधमानः प्रमृणः सेनाः प्रभञ्जँस्त्वं रथेन युधा शत्रून् परिदीया स जयन्नस्माकं रथानामवितैधि ॥ १७ । ३६ ॥

**सपदार्थान्वयः**—हे बृहस्पते !

**भाषार्थ**—हे (बृहस्पते) धार्मिक वृद्ध-जनों

बृहतां=धार्मिकाणां वृद्धानां सेनानां वा पतिस्तत्सम्बुद्धौ ! **यो रक्षोहा** यो रक्षांसि=दुष्टान् हन्ति, सः **अमित्रान्** न विद्यन्ते मित्राण्येषां तान् **अपबाधमानः** अपबाधते सः **प्रमृणः** ये प्रकृष्टतया मृणन्ति=हिंसन्ति तान् **सेनाः प्रभञ्जन्** यः प्रभग्नान् करोति सः त्वं **रथेन** रमणीयेन यानसमूहेन **युधा** युद्धे **शत्रून् परिदीया** सर्वतः क्षिणुहि, **स जयन्** उत्कर्षं प्राप्नुवन् **अस्माकं रथानां** रमणीयानां यानानाम् **अविता** रक्षिता **एधि** भव ।। १७ । ३६ ।।

वा सेनाओं के पति ! जो तू—(रक्षोहा) दुष्टों का हनन करने वाला, (अमित्रान्) शत्रुओं को (अपबाधमानः) दूर करने वाला, (प्रमृणः) उत्तमता से शत्रुओं को मारने वाला तथा उनकी (सेनाः) सेनाओं को (प्रभञ्जन्) भग्न=तोड़ने वाला होकर (रथेन) रमणीय यानों से (युधा) युद्ध में शत्रुओं को (परिदीया) सब ओर से क्षीण कर सो तू—(जयन्) उत्कर्ष को प्राप्त होकर (अस्माकम्) हमारे (रथानाम्) रमणीय यानों का (अविता) रक्षक (एधि) हो ।। १७ । ३६ ।।

[हे बृहस्पते ! यो रक्षोहाः······सेनाः प्रभञ्जन्······अस्माकम्······अविता एधि]

**भावार्थः**—राजा सेनापतिं स्वसेनां च वर्द्धयन्, शत्रुसेनां हिंसन्, धार्मिकीं प्रजां सततमुन्नयेत् ।। १७ । ३६ ।।

**भावार्थ**—राजा सेनापति और अपनी सेना को बढ़ाता हुआ, शत्रु-सेना का हनन करता हुआ धार्मिक प्रजा को सदा उन्नत करे ।।१७ । ३६।।

**भा० पदार्थः**—बृहस्पते=राजन् । सेनाः=शत्रुसेनाः । प्रभञ्जन्=हिंसन् ।

**भाष्यसार**—**सेनापति कैसा हो ?**—दुष्टों का संहारक, सज्जनों का पालक, शत्रु सेना और उनके यानों को नष्ट करने वाला, उत्तम तथा दृढ़ यानों वाला होकर उत्कर्ष को प्राप्त करने वाला, प्रजा का रक्षक और यशस्वी मनुष्य सेनापति होना चाहिए ।। १७ । ३६ ।।

अप्रतिरथः । **इन्द्रः=सेनापतिः** । आर्षी त्रिष्टुप् । धैवतः ।।

**पुनस्तमेव विषयमाह ।।**

सेनापति के कर्त्तव्य का फिर उपदेश किया है ।।

**बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान ऽ उग्रः ।**
**अभिवीरो ऽ अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ।। ३७ ।।**

**पदार्थः**—(**बलविज्ञायः**) यो बलं=बलयुक्तं सैन्यं कर्तुं जानाति सः (**स्थविरः**) वृद्धो=विज्ञातराजधर्मव्यवहारः (**प्रवीरः**) प्रकृष्टश्चासौ वीरश्च (**सहस्वान्**) सहो=बहुबलं विद्यते यस्य सः (**वाजी**) प्रशस्तो वाजः=शास्त्रबोधो विद्यते यस्य सः (**सहमानः**) यः सुखदुःखादिकं सहते (**उग्रः**) दुष्टानां वधे तीव्रतेजाः (**अभिवीरः**) अभीष्टा वीरा यस्य सः (**अभिसत्वा**) अभितः=सर्वतः सत्वानो=युद्धविद्वांसो रक्षका भृत्या वा यस्य सः (**सहोजाः**) सहसा=बलेन जातः=प्रसिद्धः (**जैत्रम्**) जेतृभिः परिवृतं रथम् (**इन्द्र**) युद्धस्य परमसामग्रीसहित (**रथम्**) रमणीयं भूसमुद्राकाशयानम् (**आ**) (**तिष्ठ**) (**गोवित्**) यो गा=वाचो धेनुः पृथिवीं वा विन्दति सः ।। ३७ ।।

**अन्वयः**—हे इन्द्र सेनापते ! बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रोऽभिवीरोऽभिसत्वा सहोजा गोवित्संस्त्वं युद्धाय जैत्रं रथमातिष्ठ ।। ३७ ।।

**सपदार्थान्वयः**—हे इन्द्र=सेनापते !

**भाषार्थ**—हे (इन्द्र) युद्ध की परम सामग्री

युद्धस्य परमसामग्रीसहित ! **बलविज्ञायः** यो बलं=बलयुक्तं सैन्यं कर्तुं जानाति सः, **स्थविरः** वृद्धो=विज्ञातराजधर्मव्यवहारः, **प्रवीरः** प्रकृष्टश्चासौ वीरश्च, **सहस्वान्** सहो=बहुबलं विद्यते यस्य सः, **वाजी** प्रशस्तो वाजः=शास्त्रबोधो विद्यते यस्य सः, **सहमानः** यः सुखदुःखादिकं सहते, **उग्रः** दुष्टानां वधे तीव्रतेजाः, **अभिवीरः** अभीष्टा वीरा यस्य सः, **अभिसत्वा** अभितः सर्वतः सत्वानो=युद्धविद्वांसो रक्षका भृत्या वा यस्य सः, **सहोजाः** सहसा=बलेन जातः=प्रसिद्धः, **गोविद्** यो गा=वाचो धेनुः पृथिवीं वा विन्दति सः, **संस्त्वं युद्धाय जैत्रं** जेतृभिः परिवृतं रथं **रथं** रमणीयं भूसमुद्राऽऽकाशयानम् **आतिष्ठ** ॥ १७ । ३७ ॥

से युक्त सेनापति ! (बलविज्ञायः) बलयुक्त सेना का निर्माण जानने वाला, (स्थविरः) वृद्ध=राजधर्म के व्यवहार के ज्ञाता, (प्रवीरः) उत्तम वीर, (सहस्वान्) बहुत बल वाला, (वाजी) उत्तम वाज=शास्त्र-बोध वाला, (सहमानः) सुख-दुःख आदि को सहन करने वाला, (उग्रः) दुष्टों के वध में तीव्र तेज वाला, (अभिवीरः) अभीष्ट वीरों वाला, (अभिसत्वा) सब ओर युद्ध के विद्वान्, रक्षक वा भृत्यों वाला, (सहोजाः) बल के कारण प्रसिद्ध, (गोविद्) गौ=वाणी, गाय वा पृथिवी को प्राप्त करने वाला, होकर तू—युद्ध के लिए (जैत्रम्) विजेताओं से घिरे हुए (रथम्) रमणीय भू-यान, समुद्र-यान और आकाश-यान में (आतिष्ठ) बैठ ॥ १७ । ३७ ॥

[हे इन्द्र=सेनापते ! ··· त्वं युद्धाय जैत्रं रथमातिष्ठ]

**भावार्थः**—सेनापतिः सेनावीरा वा यदा शत्रुभिः योद्धुमिच्छेयुस्तदा परस्परं सर्वतो रक्षां, रक्षासाधनानि वा संगृह्य, बुद्धयुत्साहेन सह वर्त्तमाना अनलसाः सन्तः शत्रुविजयतत्परा भवेयुः ॥

**भावार्थ**—सेनापति वा सेना के वीर जब शत्रुओं के साथ युद्ध करना चाहें तब परस्पर सब ओर से रक्षा वा रक्षा-साधनों का संग्रह करके, बुद्धिपूर्वक उत्साह से युक्त होकर, पुरुषार्थी होकर शत्रुओं को विजय करने में तत्पर रहें ॥

**भाष्यसार**—**सेनापति कैसा हो ?**—राजधर्म का पूर्ण विद्वान्, शूरवीर, बलवान् सहनशील, दुष्टों के वध करने में उग्र स्वभाव वाला, वीरों से स्नेह करने वाला, सेना को प्रशिक्षणादि देने में चतुर वीरता के कारण प्रख्यात, युद्ध में सदा विजेता, सभी प्रकार के यानों वाला और गायादि उपकारक पशुओं को प्राप्त करने वाला मनुष्य सेनापति होना चाहिए ॥ १७ । ३७ ॥

अप्रतिरथः । **इन्द्रः**=**सेनापतिः** । भुरिगार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।**
**इमꣳ सजाता ऽ अनु वीरयध्वमिन्द्रꣳ सखायोऽअनु सꣳरभध्वम् ॥ ३८ ॥**

**पदार्थः**—(**गोत्रभिदम्**) यः शत्रूणां गोत्राणि भिनत्ति तम् (**गोविदम्**) योऽरीणां गां=भूमिं विन्दति तम् (**वज्रबाहुम्**) वज्राः=शस्त्राणि बाह्वोर्यस्य तम् (**जयन्तम्**) शत्रून् पराजयमानम् (**अज्म**) अजन्ति=प्रक्षिपन्ति शत्रून् येन यस्मिन् वा । अत्र सुपां सुलुगिति विभक्तेर्लुक् । अज्मेति संग्रामना० ॥ निघं० २ । १७ ॥ (**प्रमृणन्तम्**) प्रकृष्टतया शत्रून् हिंसन्तम् (**ओजसा**) स्वस्य शरीरबुद्धिबलेन सैन्येन वा (**इमम्**) (**सजाताः**) समानदेशे जाता=उत्पन्नाः (**अनु**) पश्चादर्थे (**वीरयध्वम्**) विक्रमयध्वम् (**इन्द्रम्**)

शत्रुदलविदारकम् (**सखायः**) परस्परस्य सहायिनः सुहृदः सन्तः (**अनु**) आनुकूल्ये (**सम्**) सम्यक् (**रभध्वम्**) युद्धारम्भं कुरुत ।। ३८ ।।

**प्रमाणार्थ**—(**अज्म**) यहाँ 'सुपां सुलुक्०' (७ । १ । ३९) से विभक्ति का लुक् है । 'अज्म' निघं० २ । १७ में संग्राम-नामों में पठित है ।।

**अन्वयः**—हे सजाताः सखायः ! यूयमोजसा गोत्रभिदं गोविदं वज्रबाहुँ प्रमृणन्तमज्म जयन्तेममिन्द्रं सेनापतिमनुवीरयध्वमनुसंरभध्वं च ।। ३८ ।।

**सपदार्थान्वयः**—**हे सजाताः** समानदेशे जाता=उत्पन्नाः **सखायः** ! परस्परस्य सहायिनः सुहृदः सन्तः ! **यूयमोजसा** स्वस्य शरीरबुद्धिबलेन सैन्येन वा **गोत्रभिदं** यः शत्रूणां गोत्राणि भिनत्ति तं **गोविदं** योऽरीणां गां=भूमिं विन्दति तं **वज्रबाहुम्** वज्राः=शस्त्राणि बाह्वोर्यस्य तं **प्रमृणन्तं** प्रकृष्टतया शत्रून् हिंसन्तम् **अज्म** अजन्ति=प्रक्षिपन्ति शत्रून् येन यस्मिन् वा **जयन्तं** शत्रून् पराजयमानम् **इममिन्द्रं**=**सेनापतिं** शत्रुदलविदारकम् **अनुवीरयध्वं** पश्चाद् विक्रमयध्वम् **अनुसंरभध्वं** आनुकूल्येन सम्यक् युद्धारम्भं कुरुत **च** ।। १७ । ३८ ।।

**भाषार्थ**—हे (सजाताः) एक देश=स्थान में उत्पन्न (सखायः) परस्पर के सहायक मित्रो ! तुम—(ओजसा) अपने शरीर और बुद्धि के बल से वा सेना से (गोत्रभिदम्) शत्रुओं के गोत्रों का भेदन करने वाले, (गोविदम्) शत्रुओं की गौ=भूमि को प्राप्त करने वाले, (वज्रबाहुम्) अपने हाथों में वज्र=शस्त्रों को रखने वाले, (प्रमृणन्तम्) उत्तमता से शत्रुओं का हनन करने वाले, (अज्म) शत्रुओं को दूर हटाने वाले, संग्राम को (जयन्तम्) जीतने वाले (इमम्) इस (इन्द्रम्) शत्रु-दल के विदारक सेनापति के (अनुवीरयध्वम्) अनुकूल वीरता दिखाओ तथा (अनुसंरभध्वम्) अनुकूल होकर सम्यक् युद्ध का आरम्भ करो ।।

[हे सजाताः सखायः ! यूयम् ··· इममिन्द्रं=सेनापतिमनुवीरयध्वम्, अनुसंरभध्वम्]

**भावार्थः**—सेनापतयो भृत्याश्च परस्परं सुहृदो भूत्वा ऽन्योऽन्यमनुमोद्य युद्धारम्भविजयौ कृत्वा शत्रुराज्यं लब्ध्वा, न्यायेन प्रजाः पालयित्वा, सततं सुखिनः स्युः ।। १७ । ३८ ।।

**भावार्थ**—सेनापति और भृत्य परस्पर मित्र होकर, एक दूसरे का अनुमोदन करके, युद्धारम्भ और विजय करके, शत्रुओं के राज्य को प्राप्त करके, न्याय से प्रजा का पालन करके सदा सुखी रहें ।। १७ । ३८ ।।

**भाष्यसार**—**सेनापति कैसा हो ?**—स्वदेश में उत्पन्न, अपने शरीर तथा बुद्धि बल से शत्रुओं के वंश का विनाशक, शत्रुओं की भूमि और गायादि पशुओं को प्राप्त करने वाला, शस्त्रास्त्रों का सुचालक, शत्रुओं का संहार करता हुआ युद्ध में विजय प्राप्त करने वाला, शत्रुओं का विध्वंस करके ऐश्वर्य प्राप्त करने वाला और वीर-सेना को अनुकूल रखने में कुशल मनुष्य सेनापति होने योग्य है ।। १७ । ३८ ।।

अप्रतिरथः । **इन्द्रः=सेनापतिः** । निचृदार्षी त्रिष्टुप् । धैवतः ।।

**पुनस्तमेव विषयमाह ।।**

सेनापति के कृत्य का फिर उपदेश किया है ।।

**अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।**
**दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु ॥ ३९ ॥**

**पदार्थः**—(**अभि**) सर्वतः (**गोत्राणि**) शत्रुकुलानि (**सहसा**) बलेन (**गाहमानः**) विलोडनं कुर्वन् (**अदयः**) अविद्यमाना दया=करुणा यस्य सः (**वीरः**) शत्रूणां दरिता (**शतमन्युः**) शतधा मन्युः=क्रोधो यस्य सः (**इन्द्रः**) सेनेशः (**दुश्च्यवनः**) शत्रुभिर्दुःखेन च्योतुं योग्यः (**पृतनाषाट्**) यः पृतनां सहते (**अयुध्यः**) शत्रुभिर्योद्धुमयोग्यः (**अस्माकम्**) (**सेनाः**) (**अवतु**) रक्षतु (**प्र**) प्रयत्नेन (**युत्सु**) मिश्रितामिश्रितकरणेषु युद्धेषु ॥ १७ । ३९ ॥

**अन्वयः**—हे विद्वांसः ! यो युत्सु सहसा गोत्राणि प्रगाहमानोऽदयः शतमन्युर्दुश्च्यवनः पृतनाषाडयुध्यो वीरोऽस्माकं सेना अभ्यवतु स इन्द्रः सेनापतिर्भवत्वित्याज्ञापयत ॥ १७ । ३९ ॥

**सपदार्थान्वयः**—हे विद्वांसः ! यो **युत्सु** मिश्रितामिश्रितकरणेषु युद्धेषु **सहसा** बलेन **गोत्राणि** शत्रुकुलानि **प्रगाहमानः** प्रयत्नेन विलोडनं कुर्वन् **अदयः** अविद्यमाना दया=करुणा यस्य सः **शतमन्युः** शतधा मन्युः=क्रोधो यस्य सः **दुश्च्यवनः** शत्रुभिर्दुःखेन च्योतुं योग्यः **पृतनाषाड्** यः पृतनां सहते **अयुध्यः** शत्रुभिर्योद्धुमयोग्यः **वीरः** शत्रूणां दरिता **अस्माकं सेना अभ्यवतु** सर्वतः रक्षतु, **स इन्द्रः**=**सेनापतिः** सेनेशः **भवत्वित्याज्ञापयत** ॥३९॥

**भाषार्थ**—हे विद्वानो ! जो—(युत्सु) मिश्रित-अमिश्रित करने वाले युद्धों में (सहसा) बल से (गोत्राणि) शत्रु-कुलों का (प्रगाहमानः) प्रयत्न से विलोडन करने वाला, (अदयः) दया=करुणा से रहित, (शतमन्युः) शत=सौ प्रकार के मन्यु=क्रोध वाला, (दुश्च्यवनः) शत्रुओं के द्वारा दुःख से प्राप्त करने योग्य, (पृतनाषाट्) पृतना=शत्रु सेना का मर्षण करने वाला, (अयुध्यः) जिससे शत्रु युद्ध नहीं कर सकते वह (वीरः) शत्रुओं का विदारक वीर (अस्माकम्) हमारी (सेनाः) सेनाओं की (अभ्यवतु) सब ओर से रक्षा करे; वह (इन्द्रः) सेनापति हो, ऐसी आज्ञा करो !! १७ । ३९ ॥

**[हे विद्वांसः ! यो......अदयः, अस्माकं सेना अभ्यवतु, स इन्द्रः=सेनापतिर्भवत्वित्याज्ञापयत]**

**भावार्थः**—[यो] धार्मिकेषु करुणाकरः, दुष्टेषु निर्दयः, सर्वाभिरक्षको नरो भवेत् स एव सेनापालनेऽधिकर्त्तव्यः ॥ १७ । ३९ ॥

**भावार्थ**—जो धार्मिकों पर करुणा करने वाला, दुष्टों पर निर्दयी, सबका रक्षक पुरुष हो वही सेना के पालन में अधिकारी है ॥ १७ । ३९ ॥

**भा० पदार्थः**—अदयः=दुष्टेषु निर्दयः ।

**भाष्यसार**—**सेनापति कैसा हो ?**—दुष्टों के प्रति दयाहीन, शत्रुओं के प्रति शतमन्यु, युद्ध में शक्ति से शत्रु-कुलों का विघातक, शत्रुओं से दुःख से प्राप्त होने वाला तथा शत्रु से अजेय, शत्रुसेना का विदारक और अपनी सेना का रक्षक मनुष्य सेनापति होने योग्य है ॥ १७ । ३९ ॥

अप्रतिरथः । **इन्द्रः=सेनापतिः** । विराडार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

इन्द्रं ऽ आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर ऽ एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ४० ॥

**पदार्थः**—(**इन्द्रः**) परमैश्वर्ययुक्तः सेनापतिः शिक्षकः (**आसाम्**) प्रत्यक्षाणाम् (**नेता**) नायकः (**बृहस्पतिः**) बृहतामधिकाराणामध्यक्षः (**दक्षिणा**) दक्षिणस्यां दिशि (**यज्ञः**) संगन्ता (**पुरः**) पूर्वम् (**एतु**) गच्छतु (**सोमः**) सेनाप्रेरकः (**देवसेनानाम्**) विदुषां सेनानाम् (**अभिभञ्जतीनाम्**) शत्रुसेनानामभितो मर्दनमाचरन्तीनाम् (**जयन्तीनाम्**) शत्रुविजयेनोत्कर्षन्तीनाम् (**मरुतः**) वायुवद् बलिष्ठाः शूरवीराः (**यन्तु**) गच्छन्तु (**अग्रम्**) ॥ ४० ॥

**अन्वयः**—युद्धेऽभिभञ्जतीनां जयन्तीनामासां देवसेनानां नेतेन्द्रः पश्चाद्यज्ञः पुरो बृहस्पतिर्दक्षिणा सोम उत्तरस्यां चैतु मरुतोऽग्रं यन्तु ॥ ४० ॥

**सपदार्थान्वयः**— **युद्धेऽभिभञ्जतीनां** शत्रुसेनानामभितो मर्दनमाचरन्तीनां **जयन्तीनां** शत्रुविजयेनोत्कर्षन्तीनाम् **आसां** प्रत्यक्षाणां **देवसेनानां** विदुषां सेनानां **नेता** नायक **इन्द्रः** परमैश्वर्ययुक्तः सेनापतिः शिक्षकः **पश्चाद्, यज्ञः** सङ्गन्ता **पुरः** पूर्वं, **बृहस्पतिः** बृहतामधिकाराणामध्यक्षः **दक्षिणा** दक्षिणस्यां दिशि, **सोमः** सेनाप्रेरकः **उत्तरस्यां चैतु** ग[च्छ]तु, **मरुतः** वायुवद् बलिष्ठाः शूरवीरा **अग्रं यन्तु** गच्छन्तु, ॥ १७ । ४० ॥

**भाषार्थ**—युद्ध में (अभिभञ्जतीनाम्) शत्रु-सेनाओं का सब ओर से मर्दन करने वाली (जयन्तीनाम्) शत्रु-विजय से उत्कर्ष को प्राप्त करती हुई, (आसाम्) इन (देवसेनानाम्) विद्वानों की सेनाओं के (नेता) नायक (इन्द्रः) परम ऐश्वर्य से युक्त सेनापति शिक्षक पश्चिम में, (यज्ञः) संगति करने वाला (पुरः) पूर्व में, (बृहस्पतिः) बृहत्=बड़े अधिकारों का अध्यक्ष (दक्षिणा) दक्षिण दिशा में (सोमः) और सेना का प्रेरक उत्तर में (एतु) जावे । (मरुतः) वायु के समान बलिष्ठ शूरवीर (अग्रम्) आगे (यन्तु) जावें ॥ १७ । ४० ॥

[युद्धे···इन्द्रः पश्चाद् यज्ञः पुरो, बृहस्पतिः, दक्षिणा, सोमः उत्तरस्यां चैतु मरुतोऽग्रं यन्तु]

**भावार्थः**—यदा राजपुरुषाः शत्रुभिर्युयुत्सेयुस्तदा–सर्वासु दिक्ष्वध्यक्षान् शूरवीरानग्रतो, भीरूनन्तः संस्थाप्य, भोजन-आच्छादन-वहन-अस्त्र-शस्त्र-योगेन युध्येरन् ।

**भावार्थ**—जब राजपुरुष शत्रुओं से युद्ध करना चाहें तब—सब दिशाओं में अध्यक्षों को, शूरवीरों के आगे, भीरु=डरपोक लोगों को मध्य में स्थापित करके भोजन, वस्त्र, वहन=सवारी, अस्त्र-शस्त्रों की सहायता से युद्ध करें ।

तत्र विद्वत्सेनाधीना मूर्खसेनाः कार्याः ता विद्वांसो वक्तृत्वेनोत्साहयेयुः, अध्यक्षाश्च पद्मव्यूहादिभिर्योधयेयुः ॥ १७ । ४० ॥

वहाँ विद्वानों की सेनाओं के अधीन मूर्खों की सेनाओं को रखें । उन्हें विद्वान् उपदेश से उत्साहित करें, अध्यक्ष लोग पद्म-व्यूह आदि की रचना करके युद्ध करावें ॥ १७ । ४० ॥

**भा० पदार्थः**—मरुतः=अध्यक्षाः शूरवीराः ।

**भाष्यसार**—**सेनापति कैसा हो ?**—वायु के समान बलवान्, सेना को प्रशिक्षण देने वाला परमैश्वर्यवान् अपनी सेना को संघटित रखने वाला, महान् बड़े बड़े अधिकारों का सुपालक, विद्वानों में श्रेष्ठ, शत्रु सेना का मर्दन करने वाली अपनी सेना को सब दिशाओं में प्रेरणा करने वाला और परम यशस्वी मनुष्य सेनापति बनने योग्य है ॥ १७ । ४० ॥

अप्रतिरथः । **इन्द्रः**=सेनापतिः । आर्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञ ऽ आदित्यानां मरुताᳬं शर्द्ध ऽ उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ४१ ॥

**पदार्थः**—(**इन्द्रस्य**) सेनापतेः (वृष्णः) वीर्य्यवतः (वरुणस्य) सर्वोत्कृष्टस्य (राज्ञः) न्यायविनयादिभिः प्रकाशमानस्य=सर्वाधिष्ठातुः (**आदित्यानाम्**) कृताष्टाचत्वारिंशद्वर्षप्रमितब्रह्मचर्य्याणाम् (**मरुताम्**) पूर्णविद्याबलयुक्तानां पुरुषाणाम् (**शर्द्धः**) बलं=सैन्यम् (**उग्रम्**) शत्रुभिः सोढुमशक्यम् (**महामनसाम्**) महान्ति मनांसि=विज्ञानानि येषां तेषाम् (**भुवनच्यवानाम्**) य भुवनान्युत्तमानि गृहाणि च्यवन्ते=प्राप्नुवन्ति तेषाम् (**घोषः**) शौर्योत्साहजनको विचित्रवादित्रस्वरालापशब्दः (**देवानाम्**) विदुषाम् (**जयताम्**) शत्रुन् विजेतुं समर्थानाम् (**उत्**) (**अस्थात्**) उत्तिष्ठतु ॥ ४१ ॥

**अन्वयः**—वृष्ण इन्द्रस्य वरुणस्य राज्ञो भुवनच्यवानां महामनसां जयतामादित्यानां मरुतां देवानामुग्रं शर्द्धो घोषो युद्धारम्भात् पूर्वमुदस्थात् ॥ ४१ ॥

**सपदार्थान्वयः**—**वृष्णः** वीर्यवतः **इन्द्रस्य** सेनापतेः **वरुणस्य** सर्वोत्कृष्टस्य **राज्ञः** न्यायविनयादिभिः प्रकाशमानस्य सर्वाधिष्ठातुः **भुवनच्यवानां** य भुवनान्युत्तमानि गृहाणि च्यवन्ते=प्राप्नुवन्ति तेषां **महामनसां** महान्ति मनांसि=विज्ञानानि येषां तेषां **जयतां** शत्रून् विजेतुं समर्थानाम् **आदित्यानां** कृताष्टाचत्वारिंशद्वर्षप्रमितब्रह्मचर्य्याणां **मरुतां** पूर्णविद्याबलयुक्तानां पुरुषाणां **देवानां** विदुषाम् **उग्रं** शत्रुभिः सोढुमशक्यं **शर्द्धः** बलं=सैन्यं **घोषः** शौर्योत्साहजनको विचित्रवादित्रस्वरालापशब्दः **युद्धारम्भात् पूर्वमुदस्थात्** उत्तिष्ठतु ॥ १७ । ४१ ॥

**भाषार्थ**—(वृष्णः) वीर्यवान्=बलवान्, (इन्द्रस्य) सेनापति, (वरुणस्य) सब से उत्कृष्ट (राज्ञः) न्याय, विनय आदि गुणों से प्रकाशमान सबके अधिष्ठाता राजा के (भुवनच्यवानाम्) उत्तम गृहों को प्राप्त करने वाले, (महामनसाम्) महान् विज्ञानों वाले, (जयताम्) शत्रुओं को जीतने में समर्थ, (आदित्यानाम्) ४८ अड़तालीस वर्ष ब्रह्मचर्य पालन करने वाले, (मरुताम्) पूर्ण विद्या और बल से युक्त (देवानाम्) विद्वानों का-(शर्द्धः) बल=सैन्य एवं (घोषः) शौर्य तथा उत्साह को उत्पन्न करने वाला विचित्र वादित्र=बाजों का स्वरालाप आत्मक शब्द=घोष युद्ध आरम्भ होने से पूर्व (उदस्थात्) उठे ॥ १७ । ४१ ॥

[जयतामादित्यानां मरुतां देवानामुग्रं शर्द्धो घोषो युद्धारम्भात् पूर्वमुदस्थात्]

**भावार्थः**--सेनाध्यक्षैः शिक्षासमये युद्धसमये च मनोहरैर्निर्भयादिभावजनकैः शब्दितैर्वादित्रैर्वीरा हर्षणीयाः ।

**भावार्थ**--सेनाध्यक्ष लोग शिक्षा और युद्ध के समय में मनोहर, निर्भय आदि भावों को उत्पन्न करने वाले बाजे बजाकर वीरों को हर्षित करें ।

[वृष्ण इन्द्रस्य]

ये दीर्घब्रह्मचर्येणाधिकविद्यया शरीरात्मबलास्त एव युद्धसेनास्वधिकर्त्तव्याः ॥ १७ । ४१ ॥

जो—दीर्घ-ब्रह्मचर्य से अधिक विद्या के द्वारा शरीर और आत्मा से बलवान् हों उन्हें ही युद्ध-सेनाओं में अधिकारी बनावें ॥ १७ । ४१ ॥

**भा० पदार्थः**—घोषः=मनोहरो निर्भयादिभावजनको वादित्रशब्दः । वृष्णः=दीर्घ-ब्रह्मचर्येणाधिकविद्यया शरीरात्मबलवतः ॥

**भाष्यसार**—**सेनापति कैसा हो ?**—सबसे उत्कृष्ट, बलवान्, न्यायादि गुणों से विख्यात, उत्तम गृहों को प्राप्त करने वाले, महान् विज्ञानों के ज्ञाता, शत्रुओं के विजेता, ब्रह्मचर्य के पालन से विद्या और बल से सम्पन्न सेनापतियों का युद्ध समय का घोष शौर्य और उत्साह को उत्पन्न करने वाला हो ॥ १७ । ४१ ॥

अप्रतिरथः । **इन्द्रः**=**सेनापतिः** । विराडार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि ।**
**उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ ४२ ॥**

**पदार्थः**—(उत्) (हर्षय) उत्कर्षय (**मघवन्**) प्रशस्तानि मघानि=धनानि विद्यन्ते यस्य तत्सम्बुद्धौ (**आयुधानि**) समन्ताद्युध्यन्ते यैस्तानि (**उत्**) (**सत्वनाम्**) सेनायां सीदतां प्राणिनाम् (**मामकानाम्**) मदीयानां वीराणाम् (**मनांसि**) अन्तःकरणानि (**उत**) (**वृत्रहन्**) मेघहन्ता=सूर्य इव शत्रुहन्तः सेनापते (**वाजिनाम्**) तुरङ्गाणाम् (**वाजिनानि**) शीघ्रगमनानि (**उत्**) (**रथानाम्**) (**जयताम्**) (**यन्तु**) गच्छन्तु (**घोषाः**) शब्दाः ॥ १७ । ४२ ॥

**अन्वयः**—सेनास्था जनाः स्वाधीशमेवं ब्रूयुः—हे वृत्रहन् ! मघवँस्त्वं मामकानां सत्वनामायुधान्युद्धर्षय । मामकानां सत्वानां मनांस्युद्धर्षय । मामकानां वाजिनां वाजिनान्युद्धर्षय । भवत्कृपातो मामकानां जयतां रथानां घोषा उद्यन्तु ॥ १७ । ४२ ॥

**सपदार्थान्वयः**—**सेनास्था जनाः स्वाधीशमेवं ब्रूयुः**—**हे वृत्रहन् !** मेघहन्ता सूर्य इव शत्रुहन्तः सेनापते ! **मघवन् !** प्रशस्तानि मघानि=धनानि विद्यन्ते यस्य तत्सम्बुद्धौ ! **त्वं मामकानां** मदीयानां वीराणां **सत्वनां** सेनायां सीदतां प्राणिनां **आयुधानि** समन्ताद्युध्यन्ते यैस्तानि **उद्धर्षय** उत्कर्षय ।

**मामकानां** मदीयानां वीराणां **सत्वनां** सेनायां सीदतां प्राणिनां **मनांसि** अन्तःकरणानि **उद्धर्षय** उत्कर्षय ।

**मामकानां** मदीयानां वीराणां **वाजिनां** तुरङ्गाणां **वाजिनानि** शीघ्रगमनानि **उद्धर्षय** उत्कर्षय ।

**भवत्कृपातो मामकानां** मदीयानां वीराणां

**भाषार्थ**—सेना के लोग अपने सेनापति को ऐसा कहें—हे (वृत्रहन्) मेघों के हन्ता सूर्य के समान शत्रुओं के हन्ता (मघवन्) उत्तम धनों वाले सेनापति ! तू—(मामकानाम्) मेरे वीरों तथा (सत्वनाम्) सेना में विद्यमान प्राणियों के (आयुधानि) शस्त्र-अस्त्रों को (उद्धर्षय) उत्कृष्ट बना । और—

(मामकानाम्) मेरे वीरों के तथा (सत्वनाम्) सेना में विद्यमान प्राणियों के (मनांसि) अन्तः-करणों को (उद्धर्षय) उत्कृष्ट बना । और—

(मामकानाम्) मेरे वीरों तथा (वाजिनाम्) घोड़ों की (वाजिनानि) शीघ्र गतियों को (उद्धर्षय) उत्कृष्ट बना । और—

आपकी कृपा से (मामकानाम्) मेरे वीरों के

**जयतां रथानां घोषाः** शब्दाः **उद्यन्तु** उद्+गच्छन्तु ॥

(जयताम्) जीतने वाले (रथानाम्) रथों=यानों के (घोषाः) शब्द (उद्यन्तु) उठें ॥ १७ । ४२ ॥

[हे वृत्रहन् !······**मामकानां सत्वनां मनांसि उद्धर्षय, वाजिनां वाजिनान्युद्धर्षय, जयतां रथानां घोषा उद्यन्तु**]

**भावार्थः**—सेनापतिभिः शिक्षकैश्च योद्धृणां चित्तानि नित्यं हर्षणीयानि, सेनाङ्गानि सम्यगुन्नीय शत्रवो जेतव्याश्च ॥ १७ । ४२ ॥

**भावार्थ**—सेनापति और शिक्षक लोग योद्धाओं के चित्तों को नित्य हर्षित करें, सेना के अङ्गों को सम्यक् उन्नत करके शत्रुओं को जीतें ॥ १७ । ४२ ॥

**भा० पदार्थः**—मनांसि=चित्तानि । उद्धर्षय=नित्यं हर्षय । वाजिनाम्=सेनाङ्गानाम् । उद्धर्षय=उन्नय ।

**भाष्यसार**—**सेनापति का कर्त्तव्य**—सूर्य के समान शत्रुरूप मेघों का हन्ता, उत्तमैश्वर्यवान् सेनापति सदा ऐसा प्रयत्न करे कि अपनी सेना के वीरों के शस्त्रास्त्र उत्कृष्ट हों, उनका मनोबल दृढ़ हो, सेना के घोड़े प्रशिक्षित हों, और सेना के रथादि यान उत्कृष्ट हों ॥ १७ । ४२ ॥

अप्रतिरथः । **इन्द्रः=सेनापतिः** । निचृदार्षी त्रिष्टुप् । धैवतः ॥
**पुनस्तमेव विषयमाह ॥**
सेनापति के कृत्य का फिर उपदेश किया है ॥

**अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या ऽ इषवस्ता जयन्तु ।**
**अस्माकं वीरा ऽ उत्तरे भवन्त्वस्माँ२ऽ उ देवा ऽ अवता हवेषु ॥ ४३ ॥**

**पदार्थः**—(**अस्माकम्**) (**इन्द्रः**) ऐश्वर्यकारकः सेनेशः (**समृतेषु**) सम्यक् सत्यन्यायप्रकाशक-चिह्नेषु (**ध्वजेषु**) स्ववीरप्रतीतये रथाद्युपरि स्थापितेषु विजातीयचिह्नेषु (**अस्माकम्**) (**याः**) (**इषवः**) प्राप्ताः सेनाः (**ताः**) (**जयन्तु**) विजयिन्यो भवन्तु (**अस्माकम्**) (**वीराः**) (**उत्तरे**) विजयानन्तरसमये कुशला विद्यमानजीवनाः (**भवन्तु**) (**अस्मान्**) (**उ**) वितर्के (**देवाः**) विजिगीषवः (**अवत**) रक्षत (**हवेषु**) ह्वयन्ति=स्पर्द्धन्ते परस्परं येषु संग्रामेषु तेषु ॥ ४३ ॥

**अन्वयः**—हे देवाः ! विद्वांसो यूयमस्माकं समृतेषु ध्वजेष्वधोदेशे य इन्द्रोऽस्माकं या इषवः स ताश्च हवेषु जयन्त्वस्माकं वीरा उत्तरे भवन्तु । अस्मानु सर्वत्रावत ॥ ४३ ॥

**सपदार्थान्वयः**—**हे देवाः**=**विद्वांसः**! विजिगीषवः ! **यूयमस्माकं समृतेषु** सम्यक् सत्य-न्यायप्रकाशकचिह्नेषु **ध्वजेषु** स्ववीरप्रतीतये रथाद्युपरि स्थापितेषु विजातीयचिह्नेषु **अधोदेशे य इन्द्रः** ऐश्वर्यकारकः सेनेशः **अस्माकं या इषवः** प्राप्ताः सेनाः **स ताश्च हवेषु** ह्वयन्ति=स्पर्द्धन्ते परस्परं येषु संग्रामेषु तेषु **जयन्तु** विजयिन्यो भवन्तु ।

**भाषार्थ**—हे (देवाः) ! विजय के इच्छुक विद्वानो ! तुम—(अस्माकम्) हमारे (समृतेषु) सम्यक् सत्य और न्याय के प्रकाशक (ध्वजेषु) अपने वीरों की प्रतीति के लिए रथ आदि के ऊपर स्थापित विजातीय चिह्नों के नीचे जो (इन्द्रः) ऐश्वर्य को उत्पन्न करने वाला सेनापति है, और—(अस्माकम्) हमारी (याः) जो (इषवः) प्राप्त सेनाएं हैं; वह सेनापति और सेनाएं (हवेषु) संग्रामों में (जयन्तु) विजयी हों । और—

**अस्माकं वीरा उत्तरे** विजयानन्तरसमये कुशला विद्यमानजीवनाः भवन्तु ।

(अस्माकम्) हमारे (वीराः) वीर (उत्तरे) विजय के पश्चात् कुशलतापूर्वक जीवित (भवन्तु) रहें । और—

**अस्मान् उ** वितर्कपूर्वकम् **सर्वत्राऽवत** रक्षत ॥

(अस्मान्) हमारी (उ) विचारपूर्वक सर्वत्र (अवन्तु) रक्षा करो ॥ १७ । ४३ ॥

**[समृतेषु ध्वजेषु]**

**भावार्थः**—सेनाजनैः सेनापत्यादिभिः स्वस्वरथादिषु भिन्नं भिन्नं चिह्नं संस्थापनीयम्, यतोऽस्यायं रथादिरिति सर्वे जानीयुः ।

**भावार्थ**—सेना के लोग और सेनापति आदि अपने अपने रथों पर भिन्न-भिन्न चिह्न रखें, जिससे यह रथ आदि इसका है ऐसा सब जानें ॥

**[अस्माकं वीरा उत्तरे भवन्तु]**

यथा वीराणामश्वानां चाधिकः क्षयो न स्यात् तथानुष्ठातव्यम् । कुतः ? परस्परस्य पराक्रमक्षयेण ध्रुवो विजयो न भवतीति विज्ञेयम् ॥ १७ । ४३ ॥

जैसे वीरों और घोड़ों का अधिक क्षय=विनाश न हो वैसा अनुष्ठान करें क्योंकि परस्पर पराक्रम के क्षय होने से निश्चित विजय नहीं होती, ऐसा समझें ॥ १७ । ४३ ॥

**भाष्यसार**—**सेनापति का कर्त्तव्य**—विजय के इच्छुक, सत्य और न्याय का प्रकाशक तथा रक्षक सेनापति सदा ऐश्वर्य को उत्पन्न करके बढ़ाने वाला हो । और रथादि पर लगे हुए वीरता तथा विजय के प्रतीक चिह्न ध्वजाओं के नीचे संघटित होकर सेनापति के आदेश का पालन करने वाली सेनाएँ संग्राम में विजय प्राप्त करें, वीर योद्धा विजय के बाद कुशलतापूर्वक जीवित रहें, और सदा रक्षा करने वाले हों ॥ १७ । ४३ ॥

अप्रतिरथः । **इन्द्रः**=**सेनापतिः** । स्वराडार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।**
**अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ ४४ ॥**

**पदार्थः**—(**अमीषाम्**) परोक्षाणाम् (**चित्तम्**) स्वान्तम् (**प्रतिलोभयन्ती**) प्रत्यक्षे मोहयन्ती (**गृहाण**) (**अङ्गानि**) सेनावयवान् (**अप्वे**) याऽपवाति=शत्रुप्राणान् हिनस्ति तत्सम्बुद्धौ । **अपपूर्वाद्वातेरन्येभ्योऽपि दृश्यत इति क्विप् अकारलोपश्छान्दसः** (**परा**) (**इहि**) दूरं गच्छ (**अभि**) (**प्र**) (**इहि**) अभिप्रायं दर्शय (**निर्दह**) नितरां भस्मीकुरु (**हृत्सु**) हृदयेषु (**शोकैः**) (**अन्धेन**) आवरकेण (**अमित्राः**) शत्रवः (**तमसा**) रात्र्यन्धकारेण (**सचन्ताम्**) संयुञ्जन्तु ॥ १७ । ४४ ॥

**प्रमाणार्थ**—(अप्वे) यहाँ 'अप' पूर्वक 'वा' धातु से 'अन्येभ्योऽपि दृश्यते (३ । २ । १७८) से 'क्विप्' प्रत्यय है और 'अकार' का लोप छान्दस है ॥

**अन्वयः**—हे अप्वे शूरवीरे राजस्त्रि क्षत्रिये ! अमीषां चित्तं प्रतिलोभयन्ती या स्वसेनास्ति तस्या अङ्गानि त्वं गृहाण । अधर्मात् परेहि स्वसेनामभिप्रेहि शत्रून् निर्दह यत इमेऽमित्रा हृत्सु शोकैरन्धेन तमसा सह सचन्तां संयुक्तास्तिष्ठन्तु ॥ १७ । ४४ ॥

**सपदार्थान्वयः**—हे **अग्वे !**=शूरवीरे राजस्त्रि क्षत्रिये याऽपवाति=शत्रुप्राणान् हिनस्ति तत्सम्बुद्धौ ! **अमीषां** परोक्षाणां **चित्तं** स्वान्तं **प्रतिलोभयन्ती** प्रत्यक्षे मोहयन्ती **या स्वसेनास्ति, तस्या अङ्गानि** सेनावयवान् **त्वं गृहाण** ।

**अधर्मात् परेहि** दूरं गच्छ, **स्वसेनामभिप्रेहि** अभिप्रायं दर्शय, **शत्रून् निर्दह** नितरां भस्मीकुरु, **यत इमेऽमित्राः** शत्रवः **हृत्सु** हृदयेषु **शोकैरन्धेन** आवरकेण **तमसा** रात्र्यन्धकारेण **सह सचन्तां**= **संयुक्तास्तिष्ठन्तु** संयुञ्जन्तु ॥ १७ । ४४ ॥

**भाषार्थ**—हे (अप्वे) शत्रुओं के प्राणों का हिंसन करने वाली शूरवीर क्षत्रिया राजस्त्री ! तू—(अमीषाम्) उनके (चित्तम्) चित्त को (प्रति-लोभयन्ती) प्रत्यक्ष मोहित करने वाली जो अपनी सेना है उसके (अङ्गानि) अवयवों को (गृहाण) ग्रहण कर । और—अधर्म से (परेहि) दूर रह, अपनी सेना के प्रति अपना (अभिप्रेहि) अभिप्राय दिखा, शत्रुओं को (निर्दह) सर्वथा भस्म कर ।

जिससे—ये (अमित्राः) शत्रु (हृत्सु) हृदयों में (शोकैः) नाना शोक के कारण (अन्धेन) प्रकाश के आच्छादक (तमसा) रात्रि के अन्धकार से (सचन्ताम्) संयुक्त रहें ॥ १७ । ४४ ॥

[**हे अप्वे=शूरवीरे राजस्त्रि क्षत्रिये ! अमीषां चितं प्रतिलोभयन्ती या स्वसेनाऽस्ति, तस्या अङ्गानि त्वं गृहाण**]

**भावार्थः**—सभापत्यादिभिर्यथाऽतिप्रशंसिता हृष्टपुष्टा साङ्गोपाङ्गा पुरुषसेना स्वीकार्या, तथा स्त्री सेना च ।

**भावार्थ**—जैसे सभापति आदि लोग अत्यन्त प्रशंसनीय हृष्ट-पुष्ट साङ्गोपाङ्ग पुरुष-सेना को स्वीकार करें वैसे स्त्री-सेना को भी ।

[**अधर्मात् परेहि······शत्रून् निर्दह**]

यत्राऽव्यभिचारिण्यस्स्त्रियस्तिष्ठेयुस्तया सेनया शत्रवो वशे स्थापनीयाः ॥ १७ । ४४ ॥

जिसमें अव्यभिचारिणी स्त्रियाँ हों उस सेना से शत्रुओं को वश में रक्खें ॥ १७ । ४४ ॥

**भाष्यसार**—**सेनापति कैसा हो ?**—शत्रुओं के प्राणों का हिंसन करने वाली, शूरवीर क्षत्रिया राज-स्त्री भी ऐसी होनी चाहिए, जो अधर्म से अथवा शत्रु के छल-कपट युक्त व्यवहार से दूर रहने वाली, अपने गुणों से अपनी सेना को मोहित करने वाली, और शत्रु को नष्ट करके शत्रुओं के हृदयों में शोक को बढ़ाने वाली हो ॥ १७ । ४४ ॥

अप्रतिरथः । **इषुः=सेनापतिः** । आर्ष्यनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते । गच्छामित्रान् प्र पद्यस्व मामीषां कञ्चनोच्छिषः ॥४५॥**

**पदार्थः**—(**अवसृष्टा**) प्रेरिता (**परा**) (**पत**) याहि (**शरव्ये**) शरेषु-बाणेषु साध्वी स्त्री तत्सम्बुद्धौ (**ब्रह्मसंशिते**) ब्रह्मभिश्चतुर्वेदविद्भिः प्रशंसिते=शिक्षया सम्यक् तीक्ष्णीकृते (**गच्छ**) (**अमित्रान्**) शत्रून् (**प्र**) (**पद्यस्व**) प्राप्नुहि (**मा**) निषेधे (**अमीषाम्**) दूरस्थानां विरोधिनाम् (**कम्**) (**चन**) कंचिदपि (**उत्**) (**शिषः**) उद्धर्वं शिष्टं त्यजेत् ॥ १७ । ४५ ॥

**अन्वयः**—हे शरव्ये ब्रह्मसंशिते सेनानीपत्नि ! त्वमवसृष्टा सती परापतामित्रान् गच्छ

तेषां हननेन विजयं प्रपद्यस्वामीषां शत्रूणां मध्ये कञ्चन मोच्छिषो हननेन विना कञ्चिदपि मा त्यजेः ॥ १७ । ४५ ॥

**सपदार्थान्वयः**—हे **शरव्ये** शरेषु=बाणेषु साध्वी स्त्री तत्सम्बुद्धौ **ब्रह्मसंशिते**=ब्रह्मभिश्चतुर्वेदविद्भिः प्रशंसिते=शिक्षया सम्यक् तीक्ष्णीकृते ! **सेनानीपत्नि ! त्वमवसृष्टा** प्रेरिता **सती परापत** याहि **अमित्रान्** शत्रून् **गच्छ, तेषां हननेन विजयं प्रपद्यस्व** प्राप्नुहि ।

**अमीषां** दूरस्थानां विरोधिनां **शत्रूणां मध्ये कञ्चन** कंचिदपि **मा उच्छिषः** उदूर्ध्वं शिष्टं त्यजेत्, **हननेन विना कञ्चिदपि मा त्यजेः** ॥ १७ । ४५ ॥

**भाषार्थ**—हे (शरव्ये) बाण चलाने में कुशल (ब्रह्मशंसिते) ब्रह्मा=चारों वेदों के वेत्ता विद्वानों से प्रशंसित एवं शिक्षा से सम्यक् तीक्ष्ण की हुई सेनानी-पत्नी ! तू—(अवसृष्टाः) प्रेरित की हुई (परापत) दूर जा, (अमित्रान्) शत्रुओं को (गच्छ) प्राप्त कर, और उनका हनन करके विजय को (प्रपद्यस्व) प्राप्त कर । और—

(अमीषाम्) उन दूरस्थ शत्रुओं में से (कञ्चन) किसी को (मा+उच्छिषः) मारे विना मत छोड़ ॥ १७ । ४५ ॥

**[हे······सेनानीपत्नि ! त्वमवसृष्टा सती परापत, अमित्रान् गच्छ, तेषां हननेन विजयं प्रपद्यस्व]**

**भावार्थः**— सभापत्यादिभिर्यथा युद्धविद्यया पुरुषाः शिक्षणीयास्तथा स्त्रियश्च । यथा वीरपुरुषा युद्धं कुर्युस्तथा स्त्रियोऽपि कुर्वन्तु ।

**भावार्थ**—सभापति आदि लोग जैसे युद्ध-विद्या से पुरुषों को शिक्षित करें वैसे स्त्रियों को भी । जैसे वीरपुरुष युद्ध करें वैसे स्त्रियाँ भी करें ।

**[अमीषां शत्रूणां मध्ये कञ्चन मोच्छिषः]**

ये शत्रवो युद्धे हताः स्युस्तदवशिष्टाश्च शाश्वते बन्धने=कारागृहे स्थापनीयाः ॥ १७ । ४५ ॥

जो शत्रु युद्ध में मारे जावें उनसे बचे हुए शत्रुओं को निरन्तर कारागृह (जेल) में रखें ॥४५॥

**भाष्यसार**—**सेनापति कैसा हो ?**—पुरुष-सेनापति की तरह स्त्री-सेना का सेनापति भी बाणादि शस्त्रास्त्रों के चलाने में दक्षा, वेद के विद्वानों से प्रशंसिता तथा सुशिक्षिता होनी चाहिए । और वह शत्रुवर्ग का हनन करती हुई सदा विजय प्राप्त करने वाली हो । शत्रु को कहीं भी शेष न रहने दे, ऐसी यशस्विनी स्त्री को स्त्री-सेना का सेनापति बनाना चाहिए ॥ १७ । ४५ ॥

अप्रतिरथः । **योद्धा=सेनापतिः** । विराडार्ष्यनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**प्रेता जयता नर ऽ इन्द्रो वः शर्म्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ ४६ ॥**

**पदार्थः**—(प्र) (इत) शत्रून् प्राप्नुत । अत्र द्व्यचोऽतस्तिङ इति दीर्घः (**जयत**) विजयध्वम् । अत्रान्येषामपि दृश्यते इति दीर्घः (**नरः**) नायकाः (**इन्द्रः**) शत्रूणां दारयिता सेनापतिः (वः) युष्मभ्यम् (**शर्म**) गृहम् (**यच्छतु**) ददातु (**उग्राः**) दृढाः (वः) युष्माकम् (**सन्तु**) (**बाहवः**) भुजाः (**अनाधृष्याः**) शत्रुभिर्धर्षितुमयोग्याः (**यथा**) (**असथ**) भवत ॥ ४६ ॥

**प्रमाणार्थ**—(इत) यहाँ 'द्वयचोऽतस्तिङः' (६।३।१३५) से मन्त्र में दीर्घ है। (जयत) यहां 'अन्येषामपि दृश्यते' (६।३।१३७) से मन्त्र में दीर्घ है॥

**अन्वयः**—हे नरः! यूयं यथा शत्रूनित जयत इन्द्रो वः शर्म प्रयच्छतु वो बाहव उग्राः सन्तु। अनाधृष्या असथ तथा प्रयतध्वम्॥ ४६॥

**सपदार्थान्वयः**—हे नरः! नायकाः **यूयं यथा शत्रूनित** शत्रून् प्राप्नुत, **जयत** विजयध्वम्, **इन्द्रः** शत्रूणां दारयिता सेनापतिः **वः** युष्मभ्यं **शर्म** गृहं **प्रयच्छतु** ददातु, **वः** युष्माकं **बाहवः** भुजाः **उग्राः** दृढाः **सन्तु**, **अनाधृष्याः** शत्रुभिर्धर्षितुमयोग्याः **असथ** भवत **तथा प्रयतध्वम्**॥ १७। ४६॥

**भाषार्थ**—हे (नरः) नायक लोगो! तुम—जैसे शत्रुओं को (इत) प्राप्त करते और उन्हें (जयत) जीतते हो, (इन्द्रः) शत्रुओं का विदारक सेनापति (वः) तुम्हें (शर्म) घर (प्रयच्छतु) प्रदान करे, (वः) तुम्हारी (बाहवः) भुजाएँ (उग्राः) दृढ़ (सन्तु) हों, तुम (अनाधृष्याः) शत्रुओं से अधर्षणीय=न दबने योग्य (असथ) बनो; वैसा प्रयत्न करो॥ १७। ४६॥

[हे नरः! यूयं यथा शत्रूनित, जयत, इन्द्रो वः शर्म प्रयच्छतु]

**भावार्थः**—अत्रोपमालङ्कारः॥ ये शत्रूणां विजेतारो वीरास्स्युस्तान् सेनापतिर्धनान्नगृहवस्त्रादिभिः सततं सत्कुर्यात्।

**भावार्थ**—इस मन्त्र में उपमा अलङ्कार है॥ जो शत्रुओं के विजेता वीर हों उन्हें सेनापति धन, अन्न, घर और वस्त्र आदि से सदा सत्कृत करे।

[वो बाहव उग्राः सन्तु, [यथा] अनाधृष्या असथ तथा प्रयतध्वम्]

सेनास्था जनाश्च यथा बलिष्ठाः स्युस्तथा व्यवहरेयुः॥ १७। ४६॥

और सेना के लोग जैसे बलिष्ठ हों वैसा व्यवहार=आचरण करें॥ १७। ४६॥

**भा० पदार्थः**—शर्म=धनान्नगृहवस्त्रादि। उग्राः=बलिष्ठाः।

**भाष्यसार**—**१. सेनापति कैसा हो?**—इन्द्र=शत्रुओं का विदारक और शत्रुओं से न दबने वाला सेनापति अपने अधीन नायकों तथा सैनिकों को इस प्रकार प्रोत्साहित किया करे कि वे शत्रु-वर्ग को दृढ़ भुजाओं से पराजित कर सकें। और उन वीर पुरुषों का धन, अन्न, गृहादि से सत्कार किया करे।

**२. अलङ्कार**—इस मन्त्र में उपमालङ्कार है। सेनापति युद्ध के समय इस प्रकार का व्यवहार सैनिकों के साथ किया करे जिससे वे निराश न होकर उत्साहयुक्त ही बने रहें॥ १७। ४६॥

अप्रतिरथः। **मरुतः**=सेनापतिः (विद्वान्)। निचृदार्षी त्रिष्टुप्। धैवतः॥

**पुनस्तमेव विषयमाह॥**

सेनापति के कृत्य का फिर उपदेश किया है॥

असौ या सेना मरुतः परेषामभ्यैति न ऽ ओजसा स्पर्द्धमाना।
तां गूहत तमसापव्रतेन यथामी ऽअन्यो ऽअन्यन्न जानन्॥ ४७॥

**पदार्थः**—(**असौ**) (**या**) (**सेना**) (**मरुतः**) ऋत्विजो विद्वांसः (**परेषाम्**) शत्रूणाम् (**अभि**) आभिमुख्ये (**आ**) सर्वतः (**एति**) प्राप्नोति (**नः**) अस्माकम् (**ओजसा**) बलेन (**स्पर्द्धमाना**) ईर्ष्यन्ती (**ताम्**) (**गूहत**) संवृणुत (**तमसा**) अन्धकारेण शतघ्नयाद्युत्थधूमेन मेघपर्वताकारेणास्त्रादिधूमेन वा (**अपव्रतेन**) अनियमेन परुषकर्मणा (**यथा**) (**अमी**) (**अन्यः**) (**अन्यम्**) (**न**) निषेधे (**जानन्**) ॥ ४७ ॥

**अन्वयः**—हे मरुतः ! यूयं यासौ परेषां स्पर्द्धमाना सेनौजसा नोऽस्मानभ्यैति तामपव्रतेन तमसा गूहत । अमी शत्रुसेनास्था जना यथा अन्योऽन्यं न जानन् तथा विक्रमध्वम् ॥ ४७ ॥

**सपदार्थान्वयः**—हे मरुतः ! ऋत्विजो विद्वांसः **यूयं याऽसौ परेषां** शत्रूणां **स्पर्द्धमाना** ईर्ष्यन्ती **सेनौजसा** बलेन **नो=ऽस्मानभ्यैति** आभिमुख्येन सर्वतः प्राप्नोति **तामपव्रतेन** अनियमेन परुषकर्मणा **तमसा** अन्धकारेण=शतघ्न्याद्युत्थधूमेन मेघपर्वताकारेणास्त्रादिधूमेन वा **गूहत** संवृणुत ।

**अमी शत्रुसेनास्था जना यथा अन्योऽन्यं न जानन् तथा विक्रमध्वम्** ॥ १७ । ४७ ॥

**भाषार्थ**—हे (मरुतः) ऋत्विक् विद्वानो ! तुम—(या) जो (असौ) यह (परेषाम्) शत्रुओं से (स्पर्द्धमाना) ईर्ष्या करने वाली सेना (ओजसा) बल से (नः) हमें (अभि+आ+एति) सब ओर से प्राप्त होती है (ताम्) उसे (अपव्रतेन) कठोर कर्म से एवं (तमसा) अन्धकार अर्थात् शतघ्नी आदि के धूम से वा मेघ और पर्वताकार अस्त्र आदि के धूम से (संवृणुत) आच्छादित करो ।

ये शत्रु-सेना के लोग (यथा) जैसे (अन्योऽन्यम्) एक दूसरे को (न) न=(जानन्) जान सकें वैसा पराक्रम करो ॥ १७ । ४७ ॥

**[हे मरुतः ! यूयं याऽसौ परेषां स्पर्द्धमाना सेनौजसा नो=ऽस्मानभ्यैति, तामपव्रतेन तमसा गूहत]**

**भावार्थः**—यदा युद्धाय शत्रुसेनासु प्राप्तासु युद्धमाचरेत् तदा सर्वतः शस्त्रास्त्रप्रहारोत्थधूम-धूल्यादिना ता आच्छाद्य—

**भावार्थ**—जब युद्ध के लिए शत्रु-सेनाओं के प्राप्त होने पर युद्ध करे तब सब ओर से शस्त्र-अस्त्र के प्रहार से उत्पन्न धूम एवं धूलि आदि से उन्हें आच्छादित करके—

**[अमी शत्रुसेनास्था जना यथाऽन्योऽन्यं न जानन् तथा विक्रमध्वम्]**

यथैते परस्परमपि न जानीयुस्तथा सेनापत्या-दिभिर्विधेयम् ॥ १७ । ४७ ॥

जैसे ये सेना के लोग परस्पर भी न जान सकें वैसे सेनापति आदि लोग आचरण करें ॥१७।४७॥

**भा० पदार्थः**—तमसा=शस्त्रास्त्रप्रहारोत्थधूमधूल्यादिना । अन्योऽन्यम्=परस्परम् । जानन्=जानीयुः ।

**भाष्यसार**—**सेनापति का युद्ध में कर्त्तव्य**--जब शत्रु-सेना बहुत स्फूर्ति से वायु के समान बलवान् होकर सब ओर से घेर लेवे, उस समय सेनापति कठोर होकर शस्त्रास्त्रों की वर्षा से उत्पन्न धूम से अथवा विषैली गैस से इस प्रकार ढक देवे, जिससे वे परस्पर एक दूसरे को न जान सकें ॥ १७ । ४७ ॥

अप्रतिरथः । **इन्द्रबृहस्पत्यादयः**=**सेनापतिः** । पङ्क्तिः । पञ्चमः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**यत्र बाणाः सम्पतन्ति कुमारा विशिखाऽइव ।**
**तन्न ऽ इन्द्रो बृहस्पतिरदितिः शर्म्मं यच्छतु विश्वाहा शर्म्मं यच्छतु ॥ ४८ ॥**

**पदार्थः**—(**यत्र**) यस्मिन् संग्रामे (**बाणाः**) ये बणन्ति=शब्दायन्ते ते शस्त्रास्त्रसमूहाः (**संपतन्ति**) (**कुमाराः**) अतिचपला वेगवन्तो बालकाः (**विशिखा**) **यथा** विगतशिखा विविधशिखा वा (**इव**) (**तत्**) तत्र (**नः**) अस्मभ्यम् (**इन्द्रः**) सेनापतिः (**बृहस्पतिः**) बृहत्याः सभायाः सेनाया वा पालकः (**अदितिः**) अखण्डिता=सभासदलङ्कृता सभा (**शर्म**) शरणं=सुखम् (**यच्छतु**) (**विश्वाहा**) सर्वाण्यहानि=दिनानि (**शर्म**) सुखसाधकं गृहम् (**यच्छतु**) ददातु ॥ १७ । ४८ ॥

**अन्वयः**—यत्र संग्रामे विशिखा कुमारा इव बाणाः संपतन्ति तद् बृहस्पतिरिन्द्रः शर्म यच्छत्वदितिश्च विश्वाहा नः शर्म यच्छतु ॥ १७ । ४८ ॥

**सपदार्थान्वयः**—**यत्र**=**संग्रामे** यस्मिन् संग्रामे **विशिखाः** यथा विगतशिखा विविधशिखा वा **कुमाराः** अतिचपला वेगवन्तो बालकाः **इव बाणाः** ये बणन्ति=शब्दायन्ते ते शस्त्रास्त्रसमूहाः **सम्पतन्ति**, **तत्** तत्र **बृहस्पतिः** बृहत्याः सभायाः सेनाया वा पालकः **इन्द्रः** सेनापतिः **शर्म** शरणं=सुखं **यच्छतु**, **अदितिः** अखण्डिता=सभा-सदलङ्कृता सभा **च विश्वाहा** सर्वाण्यहानि=दिनानि **नः** अस्मभ्यं **शर्म** सुखसाधकं गृहं **यच्छतु** ददातु ॥ १७ । ४८ ॥

**भाषार्थ**—(**यत्र**) जिस संग्राम=युद्ध में (विशिखाः) शिखा-रहित वा नाना शिखा वाले, (कुमाराः) अति चपल वेगवान् बालकों के (इव) समान (बाणाः) शस्त्र-अस्त्र (सम्पतन्ति) एक साथ गिरते हैं (तत्) उस संग्राम में (बृहस्पतिः) बड़ी सभा वा सेना का पालक (इन्द्रः) सेनापति (शर्म) सुख (यच्छतु) प्रदान करें, और—(अदितिः) अखण्डित अर्थात् सभासदों से अलंकृत सभा (विश्वाहा) सब दिन (नः) हमारे लिए (शर्म) सुख-साधक घर (यच्छतु) प्रदान करे ॥ १७ । ४८ ॥

**[यत्र संग्रामे······कुमारा इव बाणाः सम्पतन्ति]**

**भावार्थः**—यथा बालका इतस्ततो धावन्ति, तथा युद्धसमये योद्धारोऽपि चेष्टन्ताम् ।

**भावार्थ**—जैसे बालक इधर-उधर दौड़ते हैं वैसे युद्ध के समय में योद्धा लोग भी चेष्टा करें ।

**[तत्र बृहस्पतिरिन्द्रः शर्म यच्छतु]**

ये युद्धे क्षताः क्षीणाः श्रान्ताः क्लान्ताश्छिन्न-भिन्नाङ्गा मूर्छिताश्च भवेयुस्तान् युद्धभूमेः सद्य उत्थाप्य सुखालयं नीत्वौषधादीनि कृत्वा स्वस्थान् कुर्युः ये च म्रियेरँस्तान् विधिवद् दहेयुः ।

जो युद्ध में घायल, निर्बल, श्रान्त=थके हुए, व्याकुल, छिन्न-भिन्न अंग वाले और मूर्छित हों उन्हें युद्ध-भूमि से तत्काल उठाकर, सुखालय में ले जाकर, औषध आदि करके स्वस्थ बनावें; और जो मर जावें उनकी विधिवत् अन्त्येष्टि करें ।

**[अदितिश्च···नः शर्म यच्छतु]**

राजजनास्तेषां मातृपितृस्त्रीबालकादीनां सदा रक्षां कुर्युः ॥ १७ । ४८ ॥

राजा लोग उनके माता, पिता, स्त्री, बालक आदि की सदा रक्षा करें ॥ १७ । ४८ ॥

**भाष्यसार**—**सेनापति का कर्त्तव्य**—संग्राम में घायल, छिन्न-भिन्न अंगों वाले वीर सैनिकों को ऐश्वर्यवान् सेनापति और पीछे प्रवन्ध करने वाली सभा औषधादि की सुव्यवस्था करके अन्न, वस्त्र और घरादि से सत्कृत करके सुख प्रदान किया करें ॥ १७ । ४८ ॥

अप्रतिरथः। **सोमवरुणदेवाः**=सेनापत्यादयः। आर्षी त्रिष्टुप्। धैवतः॥

**पुनस्तमेव विषयमाह॥**

सेनापति के कृत्य का फिर उपदेश किया है॥

**मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम्।**
**उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु॥ ४९॥**

**पदार्थः**—(**मर्माणि**) यानि ताडितानि सन्ति सद्यो मरणजनकान्यङ्गानि (**ते**) तव (**वर्मणा**) देहरक्षकेन (**छादयामि**) अपवृणोमि (**सोमः**) सोम्यगुणैश्वर्यसंपन्नः (**त्वा**) त्वाम् (**राजा**) विद्यान्यायविनयादिभिः प्रकाशमानः (**अमृतेन**) सर्वरोगनिवारकेणामृतात्मकेनौषधेन (**अनु**) पश्चात् (**वस्ताम्**) आच्छादयताम् (**उरोः**) बहुगुणैश्वर्यात् (**वरीयः**) अतिशयितं बह्वैश्वर्यम् (**वरुणः**) सर्वत उत्कृष्टः (**ते**) तुभ्यम् (**कृणोतु**) (**जयन्तम्**) दुष्टान् पराजयन्तम् (**त्वा**) त्वाम् (**अनु**) (**देवाः**) विद्वांसः (**मदन्तु**) उत्साहयन्तु॥ ४९॥

**अन्वयः**—हे योद्धः शूरवीर! अहं ते मर्माणि वर्मणा छादयामि। अयं सोमो राजाऽमृतेन त्वानुवस्ताम्। वरुणस्त उरोर्वरीयः कृणोतु जयन्तं त्वा देवा अनु मदन्तु॥ ४९॥

**सपदार्थान्वयः**—हे योद्धः शूरवीर! अहं ते तव **मर्माणि** यानि ताडितानि सन्ति सद्यो मरणजनकान्यङ्गानि **वर्मणा** देहरक्षकेन **छादयामि** अपवृणोमि।

अयं **सोमः** सोम्यगुणैश्वर्यसम्पन्नः **राजा** विद्यान्यायविनयादिभिः प्रकाशमानः **अमृतेन** सर्वरोगनिवारकेणामृतात्मकेनौषधेन **त्वा** त्वाम् **अनुवस्तां** पश्चादाच्छादयताम्।

**वरुणः** सर्वत उत्कृष्टः **ते** तुभ्यम् **उरोः** बहुगुणैश्वर्यात् **वरीयः** अतिशयितं बह्वैश्वर्यं **कृणोतु**।

**जयन्तं** दुष्टान् पराजयन्तं **त्वा** त्वां **देवा** विद्वांसः **अनुमदन्तु** उत्साहयन्तु॥ १७। ४९॥

**भाषार्थ**—हे योद्धा शूरवीर! मैं—(ते) तेरे (मर्माणि) जिनके ताड़न से शीघ्र मृत्यु होता है उन अङ्गों को (वर्मणा) देह-रक्षक कवच से (छादयामि) ढकता हूँ।

यह (सोमः) सोम्य गुणों एवं ऐश्वर्य से सम्पन्न, (राजा) विद्या, न्याय, विनय आदि गुणों से प्रकाशमान राजा (अमृतेन) सब रोगों के निवारक अमृतात्मक औषध से (त्वा) तुझे (अनुवस्ताम्) पीछे आच्छादित करे। और—

(वरुणः) सबसे उत्कृष्ट वरुण (ते) तेरे लिए (उरोः) बहुत गुणों वाले ऐश्वर्य से (वरीयः) अत्यन्त ऐश्वर्य को (कृणोतु) उत्पन्न करे और—

(जयन्तम्) दुष्टों को पराजित करते हुए (त्वा) तुझे (देवाः) विद्वान् लोग (अनुमदन्तु) उत्साहित करें॥ १७। ४९॥

**[हे योद्धः शूरवीर! अहं ते मर्माणि वर्मणा छादयामि…जयन्तं त्वा देवा अनुमदन्तु]**

**भावार्थः**—सेनापत्यादिभिः सर्वेषां योद्धृणां शरीरादिरक्षणं सर्वतः कृत्वैते सततं प्रोत्साहनीया अनुमोदनीयाश्च,

**भावार्थ**—सेनापति आदि—सब योद्धाओं के शरीर आदि की रक्षा सब ओर से करके इन्हें सदा प्रोत्साहित और अनुमोदित करें,

[हेतुमाह—]

यतो विश्वतो विजयं लभेरन् ॥ १७ । ४९ ॥

जिससे—सब ओर से विजय को प्राप्त करें ॥ १७ । ४९ ॥

**भा० पदार्थः**—अनुमदन्तु=प्रोत्साहयन्तु, अनुमोदयन्तु च ॥

**भाष्यसार**—**सेनापति का कर्त्तव्य**—वरुणः=सबसे उत्कृष्ट, विद्या न्यायादि गुणों से प्रकाशमान सेनापति का यह परम कर्त्तव्य है कि वह योद्धाओं के मर्म-स्थलों को कवचों से ढकता रहे, घायलों को ओषधादि की सुव्यवस्था करके सुखी रक्खे, और वीर योद्धाओं को पुरस्कारादि से प्रोत्साहित किया करे ॥ १७ । ४९ ॥

अप्रतिरथः । **अग्निः**=**सेनापतिः** । विराडार्ष्यनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**उदेनमुत्तरां नयाग्ने घृतेनाहुत । रायस्पोषेण सꣳ सृज प्रजया च बहुं कृधि ॥ ५० ॥**

**पदार्थः**—(उत्) (एनम्) विजेतारम् (**उत्तराम्**) उत्कृष्टतया तरन्ति यया सेनया तां प्राप्तविजयाम् (**नय**) (**अग्ने**) प्रकाशमय (**घृतेन**) आज्येन (**आहुत**) तृप्ति प्राप्त (**रायः**) राज्यश्रियः (**पोषेण**) पोषणेन (**सम्**) सम्यक् (**सृज**) योजय (**प्रजया**) बहुसन्तानैः (**च**) (**बहुम्**) अधिकं कर्म (**कृधि**) कुरु ॥ १७ । ५० ॥

**अन्वयः**—हे घृतेनाहुताग्ने सेनापते ! त्वमेनमुत्तरामुन्नय रायस्पोषेण संसृज प्रजया च बहुं कृधि ॥ १७ । ५० ॥

**सपदार्थान्वयः**—हे **घृतेन** आज्येन **आहुत** तृप्ति प्राप्त **अग्ने** !=**सेनापते** प्रकाशमय ! त्वमेनं विजेतारम् **उत्तराम्** उत्कृष्टतया तरन्ति यया सेनया तां प्राप्तविजयाम् **उन्नय**, **रायः** राज्यश्रियः **पोषेण** पोषणेन **संसृज** सम्यग् योजय, **प्रजया** बहुसन्तानैः **च बहुम्** अधिकं कर्म **कृधि** कुरु ॥१७।५०॥

**भाषार्थ**—हे (घृतेन) घृत से (आहुत) तृप्ति को प्राप्त (अग्ने) प्रकाशमय सेनापति ! तू—(एवम्) इस विजेता को तथा (उत्तराम्) विजय को प्राप्त करने वाली सेना को (उन्नय) उन्नत कर, (रायः) राज्य-श्री के (पोषेण) पोषण से (संसृज) संयुक्त कर, (च) और—(प्रजया) बहुत सन्तानों से (बहुम्) अधिक कर्म (कृधि) कर ॥ १७ । ५० ॥

[हे······**अग्ने** !=**सेनापते** ! **त्वमेन मुत्तरामुन्नय**]

**भावार्थः**—यः सेनाधिकारी भृत्यो वा धर्म्येण युद्धेन दुष्टान् विजयेत,

**भावार्थ**—जो सेना-अधिकारी वा भृत्य धर्म-युक्त युद्ध से दुष्टों को जीते—

[**रायस्पोषेण संसृज**]

तं सभासेनापतयो धनादिना बहुधा सत्कुर्युः ॥

उसे सभापति और सेनापति धन आदि से बहुत सत्कृत करें ॥ १७ । ५० ॥

**भाष्यसार—सेनापति का कर्त्तव्य**—घृतादि पदार्थों से तृप्त और अग्नि के समान तेजस्वी सेनापति विजय के पश्चात् वीरों को धनादि से पुरस्कृत तथा पदवृद्धि आदि से प्रोत्साहित किया करे ॥ १७ । ५० ॥

अप्रतिरथः । **इन्द्रः=सेनापतिः** । आर्ष्यनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

सेनापति के कृत्य का फिर उपदेश किया है ॥

**इन्द्रेमं प्रतरां नय सजातानामसद्वशी । समेनं वर्चसा सृज देवानां भागदा ऽ असत् ॥५१॥**

**पदार्थः**—(**इन्द्र**) सुखानां धारक (**इमम्**) विजयमानम् (**प्रतराम्**) प्रतरन्त्युल्लङ्घयन्ति शत्रुबलानि यया नीत्या ताम् (**नय**) प्रापय (**सजातानाम्**) समानजन्मनाम् (**असत्**) भवेत् (**वशी**) जितेन्द्रियः (**सम्**) सम्यक् (**एनम्**) (**वर्चसा**) विद्याप्रकाशेन (**सृज**) युङ्ग्धि (**देवानाम्**) विदुषां योद्धृणां मध्ये (**भागदाः**) अंशप्रदः (**असत्**) ॥ ५१ ॥

**अन्वयः**—हे इन्द्र ! त्वं सजातानां देवानामिमं प्रतरां नय यतोऽयं वश्यसत् । एनं वर्चसा संसृज यतोऽयं भागदा असत् ॥ ५१ ॥

**सपदार्थान्वयः**—**हे इन्द्र** ! सुखानां धारक ! **त्वं सजातानां** समानजन्मनां **देवानां** विदुषां योद्धृणां मध्ये **इमं** विजयमानं **प्रतरां** प्रतरन्त्युल्लङ्घयन्ति शत्रुबलानि यया नीत्या तां **नय** प्रापय, **यतोऽयं वशी** जितेन्द्रियः **असत्** भवेत् ।

**एनं वर्चसा** विद्याप्रकाशेन **संसृज** सम्यग् युङ्ग्धि, **यतोऽयं भागदाः** अंशप्रदः **असत्** भवेत् ॥

**भाषार्थ**—हे (इन्द्र) सुखों को धारण करने वाले सेनापति ! तू—(सजातानाम्) अपने समान आयु वाले (देवानाम्) विद्वान् योद्धाओं के मध्य में (इमं) विजेता को (प्रतराम्) शत्रु-सेनाओं को पार कराने वाली नीति को (नय) प्राप्त करा, जिससे यह (वशी) जितेन्द्रिय (असत्) बने । और—

(एनम्) इसको (वर्चसा) विद्या के प्रकाश से (संसृज) संयुक्त कर, जिससे यह (भागदाः) अंश-दाता (असत्) बने ॥ १७ । ५१ ॥

[**हे इन्द्र ! त्वं···देवानामिमं···वर्चसा संसृज, यतो ऽयं भागदा असत्**]

**भावार्थः**—युद्धे भृत्याः शत्रूणां यान् पदार्थान् प्राप्नुयुस्तान् सर्वान् सभापती राजा न स्वीकुर्यात्, किन्तु—तेषां मध्याद् यथायोग्यं सत्काराय योद्धृभ्यो षोडशांशं प्रदद्याद्, यावतः पदार्थान् भृत्याः प्राप्नुयुस्तावतां षोडशांशं राज्ञे प्रदद्युः ।

**भावार्थ**—युद्ध में भृत्य लोग शत्रुओं के जिन पदार्थों को प्राप्त करें उन सबको सभापति राजा स्वीकार न करे, किन्तु—उनमें से यथायोग्य सत्कार के लिए योद्धाओं को सोलहवाँ भाग देवे, जितने पदार्थों को भृत्य लोग प्राप्त करें उनमें से सोलहवाँ भाग राजा को देवें ।

[**अयं वशी असत्**]

यदि सभेशादयो जितेन्द्रियाः स्युस्तर्हि—एतेषां कदापि पराजयो न स्यात् ।

यदि सभापति आदि जितेन्द्रिय हों तो—इनका कभी भी पराजय न हो ।

[भागदाः]

यदि सभेशः स्वहितं चिकीर्षेत् तर्हि योद्धृणामंशं स्वयं न स्वीकुर्यात् ॥ १७ । ५१ ॥

यदि सभापति अपना हित करना चाहे तो योद्धाओं के भाग को स्वयं स्वीकार न करे ॥

**भाष्यसार**—**सेनापति का कर्त्तव्य**—ऐश्वर्य सम्पन्न सेनापति अपने तुल्य बलवान् वीर योद्धाओं के साथ ऐसा सद्व्यवहार करे, जिससे शत्रुओं को प्राण-पण से जीतने का प्रयत्न करें। उनमें किसी प्रकार का भेद-भाव उत्पन्न न हो सके, वे संयम से रहें। और शत्रुओं के जीते गये पदार्थों को वीरों में वितरण कर सदा प्रोत्साहित किया करे ॥ १७ । ५१ ॥

अप्रतिरथः । **अग्निः**=पुरोहित-ऋत्विक्-यजमानाः । निचृदार्ष्यनुष्टुप् ।
गान्धारः ॥

**अथ पुरोहितर्त्विग्यजमानकृत्यमाह ॥**

अब पुरोहित ऋत्विक् और यजमान के कृत्य का उपदेश किया है ॥

**यस्यं कुर्मो गृहे हविस्तमंग्ने वर्द्धया त्वम् । तस्मैं देवा ऽ अधिं ब्रुवन्नयं च ब्रह्मणस्पतिः ॥ ५२ ॥**

**पदार्थः**—(**यस्य**) राज्ञः (**कुर्मः**) सम्पादयामः (**गृहे**) (**हविः**) होमम् (**तम्**) (**अग्ने**) विद्वन् पुरोहित (**वर्द्धय**) **अत्रान्येषामपीति दीर्घः** (**त्वम्**) (**तस्मै**) तं यजमानम् । **अत्र व्यत्ययेन चतुर्थी** (**देवाः**) दिव्यगुणा ऋत्विजः (**अधि**) (**ब्रुवन्**) अधिकं ब्रुवन्तु । लेट्प्रयोगोऽयम् (**अयम्**) (**च**) (**ब्रह्मणः**) वेदस्य (**पतिः**) पालको यजमानः ॥ ५२ ॥

**प्रमाणार्थ**—(**वर्द्धय**) यहाँ 'अन्येषामपि दृश्यते' (६ । ३ । १३७) से मन्त्र में दीर्घ है । (**तस्मै**) तं यजमानम् । यहाँ व्यत्यय से चतुर्थी विभक्ति है । (**ब्रुवन्**) यह 'लेट्' लकार का प्रयोग है ॥

**अन्वयः**—हे अग्ने ! वयं यस्य गृहे हविष्कुर्मस्तं त्वं वर्धय देवास्तस्मा अधि ब्रुवन् । अयं ब्रह्मणस्पतिश्च तानधिब्रवीतु ॥ ५२ ॥

**सपदार्थान्वयः**—हे **अग्ने** ! विद्वन् पुरोहित ! **वयं यस्य** राज्ञः **गृहे हविः** होमं **कुर्मः** सम्पादयामः, **तं त्वं वर्धय** ।

**देवाः** दिव्यगुणा ऋत्विजः **तस्मै** तं यजमानम् **अधिब्रुवन्** अधिकं ब्रुवन्तु ।

**अयं ब्रह्मणः** वेदस्य **पतिः** पालको यजमानः **च तानधिब्रवीतु** ॥ १७ । ५२ ॥

**भाषार्थ**—हे (अग्ने) विद्वान् पुरोहित ! हम—(यस्य) जिस राजा के (गृहे) घर में (हविः) होम (कुर्मः) करें, (तम्) उसे (त्वम्) तू (वर्धय) बढ़ा ।

(देवाः) दिव्य गुणों वाले ऋत्विक् लोग (तस्मै) उस यजमान को (अधिब्रुवन्तु) अधिक उपदेश करें ।

(च) और—(अयम्) यह (ब्रह्मणः) वेद का (पतिः) पालक यजमान उन्हें शिक्षा करे ॥

[**हे अग्ने ! वयं यस्य गृहे हविः कुर्मस्तं त्वं वर्धय**]

**भावार्थः**—पुरोहितस्य तत् कर्मास्ति यतो यजमानस्योन्नतिस्स्याद् ।

यो यस्य यादृशं यावच्च कर्म कुर्यात् तस्मै तादृशं तावदेव मासिकं वेतनं देयम् ।

**भावार्थ**—पुरोहित का वह काम है जिससे यजमान की उन्नति हो ।

जो जिसका जैसा और जितना काम करे उसे वैसा और उतना ही मासिक वेतन देना चाहिए ।

[देवास्तस्मा अधिब्रुवन्]

सर्वे विद्वांसः सर्वान् प्रति सत्यमुपदिशेयू राजा च ॥ १७ । ५२ ॥

सब विद्वान् और राजा सबको सत्य उपदेश करें ॥ १७ । ५२ ॥

**भा० पदार्थः**—देवाः=विद्वांसः । अधिब्रुवन्=सत्यमुपदिशेयुः ॥

**भाष्यसार**—**पुरोहित का कर्त्तव्य**—विद्यादि सद्गुणों से युक्त ऋत्विक् पुरोहित जिस यजमान के घर यज्ञादि श्रेष्ठ कार्य करवावें, उनकी सदा उन्नति के विषय में सोचें । और उन्हें आगे बढ़ावें, और यजमान को सदुपदेशों द्वारा शिक्षित करके वेदों का रक्षक बनाने का प्रयत्न करें ॥ १७ । ५२ ॥

अप्रतिरथः । **अग्निः**=**सभापतिः** । विराडार्ष्यनुष्टुप् । गान्धारः ॥

**अथ सभापतिविषयमाह ॥**

अब सभापति के विषय को कहा है ॥

**उदु॑ त्वा॒ विश्वे॑ दे॒वाऽअग्ने॒ भर॑न्तु॒ चित्ति॑भिः । स नो॑ भव शि॒वस्त्वꣳ सु॒प्रती॑को वि॒भाव॑सुः ॥५३॥**

**पदार्थः**—(उत्) (उ) (त्वा) त्वाम् (**विश्वे**) सर्वे (**देवाः**) विद्वांसः (**अग्ने**) विद्वन् (**भरन्तु**) धरन्तु (**चित्तिभिः**) संज्ञानैः (**सः**) (**नः**) अस्मभ्यम् (**भव**) (**शिवः**) मङ्गलकारी (**त्वम्**) (**सुप्रतीकः**) सुष्ठु प्रतीकं=प्रतीतिकरं ज्ञानं यस्य (**विभावसुः**) यो विविधासु भासु विद्याप्रकाशेषु वा वसति सः ॥ १७ । ५३ ॥

**अन्वयः**—हे अग्ने ! सभेश यं त्वा विश्वे देवाश्चित्तिभिरुद्भरन्तु स उ त्वं नः शिवः सुप्रतीको विभावसुर्भव ॥ १७ । ५३ ॥

**सपदार्थान्वयः**—हे **अग्ने** !=सभेश विद्वन् यं **त्वा** त्वां **विश्वे** सर्वे **देवाः** विद्वांसः **चित्तिभिः** संज्ञानैः उद्भरन्तु धरन्तु, **स उ त्वं नः** अस्मभ्यं **शिवः** मङ्गलकारी **सुप्रतीकः** सुष्ठु प्रतीकं=प्रतीतिकरं ज्ञानं यस्य **विभावसुः** यो विविधासु भासु विद्याप्रकाशेषु वा वसति सः **भव** ॥ १७ । ५३ ॥

**भाषार्थ**—हे (अग्ने) विद्वान् सभापति ! (त्वा) तुझे (विश्वे) सब (देवाः) विद्वान् (चित्तिभिः) संज्ञान=उत्तम ज्ञान से (उद्भरन्तु) धारण करें, (सः) सो (उ) विचारपूर्वक (त्वम्) तू (नः) हमारे लिए (शिवः) मङ्गलकारी, (सुप्रतीकः) सुप्रसिद्धिकारक ज्ञान वाला, (विभावसुः) विविध दीप्ति वा विद्याप्रकाशों में रहने वाला (भव) बन ॥ ५३ ॥

[हे अग्ने=सभेश ! यं त्वा विश्वे देवाश्चित्तिभिरुद्भरन्तु स...त्वं नः शिवः...भव]

**भावार्थः**—ये येभ्यो विद्यां दद्युस्ते तेषां सेवकाः स्युः ॥ १७ । ५३ ॥

**भावार्थ**—जो जिन्हें विद्या प्रदान करें वे उनके सेवक रहें ॥ १७ । ५३ ॥

**भाष्यसार**—**सभापति कैसा हो ?**—वेदादि शास्त्रों का विद्वान् सभापति सदा विद्या की वृद्धि तथा अविद्या के नाश का प्रयत्न किया करे । विविध गुणों के कारण स्वयं प्रसिद्ध होकर सबका मङ्गलकारी बनने का प्रयत्न करे ॥ १७ । ५३ ॥

अप्रतिरथः । **दिग्**=**स्पष्टम्** । स्वराडार्षी त्रिष्टुप् । धैवतः ॥

**अथ स्त्रीपुरुषकृत्यमाह ॥**

अब स्त्री पुरुष के कृत्य को अगले मन्त्र में कहा है ॥

पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे ऽ अधि यज्ञो ऽ अस्थात् ॥ ५४ ॥

**पदार्थः**—(**पञ्च**) पूर्वादिचतस्रो मध्यस्था चैका (**दिशः**) आशाः (**दैवीः**) देवानामिमाः (**यज्ञम्**) सङ्गन्तव्यं सत्कर्त्तव्यं वा गृहाश्रमम् (**अवन्तु**) कामयन्ताम् (**देवीः**) दिव्या विदुष्यो ब्रह्मचारिण्यः स्त्रियः (**अप**) (**अमतिम्**) अज्ञानम् (**दुर्मतिम्**) दुष्टां प्रज्ञाम् (**बाधमानाः**) निस्सारयन्त्यः (**रायः**) धनस्य (**पोषे**) पोषणे (**यज्ञपतिम्**) राज्यपालकम् (**आभजन्तीः**) समन्तात् सेवमानाः (**रायः**) श्रियः (**पोषे**) पुष्टौ (**अधि**) (**यज्ञः**) गृहाश्रमः) (**अस्थात्**) तिष्ठेत् ॥ १७ । ५४ ॥

**अन्वयः**—अपामतिं दुर्मतिं बाधमाना दैवीर्देवीः पञ्च दिश इव विस्तृता रायस्पोषे यज्ञपतिं स्वामिनमाभजन्तीर्यज्ञमवन्तु यतोऽयं यज्ञो रायस्पोषेऽध्यस्थादधितिष्ठेत् ॥ १७ । ५४ ॥

**सपदार्थान्वयः**—**अपामतिम्** अज्ञानं **दुर्मतिं** दुष्टां प्रज्ञां **बाधमानाः** निस्सारयन्त्यः **दैवीः** देवानामिमाः **देवीः** दिव्या विदुष्यो ब्रह्मचारिण्यः स्त्रियः **पञ्च** पूर्वादिचतस्रो मध्यस्था चैका **दिशः** आशाः **इव विस्तृता रायस्पोषे** धनस्य पोषणे **यज्ञपतिं=स्वामिनं** राज्यपालकम् **आभजन्तीः** समन्तात् सेवमानाः **यज्ञं** सङ्गन्तव्यं सत्कर्त्तव्यं वा गृहाश्रमम् **अवन्तु** कामयन्ताम् ।

**भाषार्थ**—(अपामतिम्) अज्ञान (दुर्मतिम्) दुष्ट प्रज्ञा=बुद्धि को (बाधमानाः) निकालती हुई=दूर करती हुई (दैवीः) विद्वानों की (देवीः) विदुषी ब्रह्मचारिणी स्त्रियाँ—(पंच) पूर्व आदि चार और एक मध्य की पांच (दिशः) दिशाओं के समान विस्तृत होकर (रायस्पोषे) धन के पोषण में (यज्ञपतिम्) राज्य के पालक स्वामी की (आभजन्तीः) सब ओर से सेवा करती हुई (यज्ञम्) संग वा सत्कार के योग्य गृहाश्रम की (अवन्तु) कामना करें।

यतोऽयं **यज्ञः** गृहाश्रमः **रायः** श्रियः **पोषे** पुष्टौ **अध्यस्थाद्=अधितिष्ठेत्** ॥ १७ । ५४ ॥

जिससे—यह (यज्ञः) गृहाश्रम (रायः) धन की (पोषे) पुष्टि में (अध्यस्थाद्) स्थित रहे ॥ ५४ ॥

[**देवीः—यज्ञपतिमाभजन्तीर्यज्ञमवन्तु**]

**भावार्थः**—अत्र लुप्तोपमालङ्कारः। यत्र गृहाश्रमे धार्मिका विद्वांसः, प्रशंसिता विदुष्यः स्त्रियश्च सन्ति, तत्र दुर्व्यसनानि न जायन्ते।

**भावार्थ**—यहाँ लुप्तोपमा अलंकार है ॥ जिस गृहाश्रम में धार्मिक विद्वान् और प्रशंसित विदुषी स्त्रियाँ हैं वहाँ दुर्व्यसन उत्पन्न नहीं होते।

[**पञ्चदिश इव विस्तृता……रायस्पोषे ऽध्यस्थात्=अधितिष्ठेत्**]

यदि सर्वासु दिक्षु प्रशंसिताः प्रजा भवेयुस्तर्हि—राज्ञः समीपे ऽन्येभ्योऽधिकैश्वर्यं स्यात् ॥ १७ । ५४ ॥

यदि सब दिशाओं में प्रशंसित प्रजा हो तो—राजा के पास दूसरों से अधिक ऐश्वर्य हो ॥ ५४ ॥

**भा० पदार्थः**—देवीः=धार्मिका विद्वांसः, प्रशंसिता विदुष्यास्स्त्रियः ।

**भाष्यसार**—१. **दिशास्थ प्रजा कैसी हो ?**—जैसे विदुषी स्त्रियाँ गृहाश्रम रूपी यज्ञ की रक्षा के लिए अज्ञान और बुरे विचारों को छोड़कर सुखी रहती हैं, इसी प्रकार पांचों दिशाओं में रहने वाली जिस राज्य में प्रजा शिक्षादि गुणों से सम्पन्न होती है, उस राजा का ऐश्वर्य सदा बढ़ता है।

२. **अलङ्कार**—इस मन्त्र में लुप्तोपमालङ्कार है। विद्वान् पुरुष और विदुषी स्त्रियों की तरह सब प्रजा अविद्या तथा दुर्बुद्धि का परित्याग किया करे ॥ १७ ॥ ५४ ॥

अप्रतिरथः । **अग्निः**=यज्ञः । भुरिगार्षी पङ्क्तिः । पञ्चमः ।।

**यज्ञः कथं कर्त्तव्य इत्युपदिश्यते ।।**

यज्ञ कैसे करना चाहिए, इस विषय का उपदेश किया है ।।

**समिद्धे ऽ अग्नावधि मामहान ऽ उक्थपत्र ऽ ईड्यो गृभीतः ।**
**तप्तं घर्म्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाः ॥ ५५ ॥**

**पदार्थः**—(**समिद्धे**) सम्यक् प्रदीप्ते (**अग्नौ**) पावके (**अधि**) (**मामहानः**) अतिशयेन महान्=पूजनीयः (**उक्थपत्रः**) उक्थानि=वक्तुं योग्यानि वेदस्तोत्राणि पत्राणि=विद्यागमकानि यस्य सः (**ईड्यः**) ईडितुं=स्तोतुमध्येषितुं योग्यः (**गृभीतः**) गृहीतः (**तप्तम्**) तापान्वितम् (**घर्मम्**) अग्निहोत्रादिकं यज्ञम् । **घर्म इति यज्ञनाम० ।। निघं० ३ । १७ ।।** (**परिगृह्य**) सर्वतो गृहीत्वा (**अयजन्त**) यजन्तु (**ऊर्जा**) बलेन (**यत्**) यम् (**यज्ञम्**) अग्निहोत्रादिकम् (**अयजन्त**) यजन्ते (**देवाः**) विद्वांसः ।। ५५ ।।

**प्रमाणार्थ**--(**घर्मम्**) 'घर्म' यह पद निघं० ३ । १७ में यज्ञ-नामों में पठित है ।।

**अन्वयः**—हे मनुष्याः ! यूयं यथा देवा समिद्धेऽग्नौ यद्यं यजमयजन्त तथा योऽधिमामहान उक्थपत्र ईड्यो गृभीतोऽस्ति तं तप्तं घर्ममूर्जा परिगृह्यायजन्त ।।

**सपदार्थान्वयः**—**हे मनुष्याः ! यूयं यथा देवाः** विद्वांसः **समिद्धे** सम्यक् प्रदीप्ते **अग्नौ** पावके **यद्**=**यं यज्ञम्** अग्निहोत्रादिकम् **अयजन्त** यजन्ते, **तथा योऽधिमामहानः** अतिशयेन महान्=पूजनीय **उक्थपत्रः** उक्थानि=वक्तुं योग्यानि वेद-स्तोत्राणि पत्राणि=विद्यागमकानि यस्य सः **ईड्यः** ईडितुं=स्तोतुमध्येषितुं योग्यः **गृभीतः** गृहीतः **अस्ति, तं तप्तं** तापान्वितं **घर्म्मम्** अग्निहोत्रादिकं यज्ञम् **ऊर्जा** बलेन **परिगृह्य** सर्वतो गृहीत्वा **अयजन्त** यजन्तु ।। १७ । ५५ ।।

**भाषार्थ**—हे मनुष्यो ! तुम—जैसे (देवाः) विद्वान् लोग (समिद्ध) सम्यक् प्रदीप्त (अग्नौ) अग्नि में (यत्) जिस (यज्ञम्) अग्निहोत्र आदि (अयजन्त) यज्ञ करते हैं वैसे—जो (अधिमामहानः) अत्यन्त महान् एवं पूजनीय, (उक्थपत्रः) उपदेश के योग्य वेद-स्तोत्रों से विद्या को प्राप्त कराने वाला, (ईड्यः) स्तुति एवं सत्कार के योग्य, (गृभीतः) ग्रहण किया हुआ है उस (तप्तम्) ताप से युक्त (घर्म्मम्) अग्निहोत्र आदि यज्ञ को (ऊर्जा) बल से (परिगृह्य) ग्रहण करके (अयजन्त) यज्ञ करो ।।

**[हे मनुष्याः ! यूयं यथा देवाः······यद्=यं यज्ञमयजन्त,······तथा······तं घर्मम्······अयजन्त]**

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः ।। मनुष्यैर्जगदुपकाराय यथा विद्वांसोऽग्निहोत्रादिकं यज्ञमनुतिष्ठन्ति तथाऽयमनुष्ठातव्यः ।।

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलंकार है ।। मनुष्य—जगत् के उपकार के लिए जैसे विद्वान् लोग अग्निहोत्र आदि यज्ञ करते हैं वैसे इसका अनुष्ठान करें ।। १७ । ५५ ।।

**भाष्यसार**—**१. यज्ञ कैसे करें** ?—अत्यन्त पूजनीय, वेद के स्तोत्रों से विद्या का दान देने वाले, स्तुति के योग्य विद्वान् पुरुष जैसे प्रदीप्त अग्नि में यज्ञ करते हैं, वैसे ही दूसरे भी उनका अनु-करण किया करें ।

**२. अलङ्कार**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है । विद्वानों की तरह दूसरे मनुष्य भी यज्ञादि श्रेष्ठ कार्य किया करें ।। १७ । ५५ ।

अप्रतिरथः । **अग्निः=यज्ञः** । विराडार्षी पङ्क्तिः । पञ्चमः ॥

**अथ यज्ञ कथं कर्त्तव्य इत्याह ॥**

अब यज्ञ कैसे करना चाहिए, यह उपदेश किया है ॥

**दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमनाः शतपयाः ।**
**परिगृह्य देवा यज्ञमायन् देवा देवेभ्यो ऽ अध्वर्य्यन्तो ऽ अस्थुः ॥ ५६ ॥**

**पदार्थः**—(**दैव्याय**) दिव्येषु गुणेषु भवाय (**धर्त्रे**) धारणशीलाय (**जोष्ट्रे**) जुषमाणाय (**देवश्रीः**) श्रीयते या सा श्रीर्देवेषु विद्यते यस्य सः (**श्रीमनाः**) श्रियि मनो यस्य सः (**शतपयाः**) शतानि पयांसि=दुग्धादीनि वस्तूनि यस्य सः (**परिगृह्य**) (**देवाः**) कामयमानाः (**यज्ञम्**) संगन्तव्यं गृहाश्रममग्निहोत्रादिकं वा (**आयन्**) प्राप्नुवन्तु (**देवाः**) विद्यादातारः (**देवेभ्यः**) विद्वद्भ्यः (**अध्वर्यन्तः**) आत्मनोऽध्वरमिच्छन्तः (**अस्थुः**) तिष्ठेयुः ॥ ५६ ॥

**अन्वयः**—हे मनुष्याः ! यथाऽध्वर्यन्तो देवा विद्वांसो देवेभ्यो यज्ञेऽस्थुर्यथा दैव्याय धर्त्रे जोष्ट्रे होत्रे देवश्रीः श्रीमनाः शतपया यजमानो वर्त्तते तथा देवा यूयं विद्याः परिगृह्य यज्ञमायन् ॥

**सपदार्थान्वयः**—हे **मनुष्याः** ! **यथाऽध्वर्यन्तः** आत्मनोऽध्वरमिच्छन्तः **देवाः**=**विद्वांसः** कामयमानाः **देवेभ्यः** विद्वद्भ्यः **यज्ञेऽस्थुः** तिष्ठेयुः,

**यथा दैव्याय** दिव्येषु गुणेषु भवाय **धर्त्रे** धारणशीलाय **जोष्ट्रे** जुषमाणाय **होत्रे देवश्रीः** श्रीयते या सा श्रीर्देवेषु विद्यते यस्य सः **श्रीमनाः** श्रियि मनो यस्य सः **शतपयाः** शतानि पयांसि=दुग्धादीनि वस्तूनि यस्य सः **यजमानो वर्त्तते, तथा देवाः** विद्यादातारः **यूयं विद्याः परिगृह्य यज्ञं** सङ्गन्तव्यं गृहाश्रममग्निहोत्रादिकं वा **आयन्** प्राप्नुत ॥

**भाषार्थ**—हे मनुष्यो ! जैसे-(अध्वर्यन्तः) अपने अध्वर=यज्ञ की इच्छा करते हुए (देवाः) विद्वान् लोग (देवेभ्यः) विद्वानों के लिए यज्ञ में (अस्थुः) बैठें ।

जैसे—(दैव्याय) दिव्य गुणों में विद्यमान, (धर्त्रे) धारणशील, (जोष्ट्रे) प्रीति और सेवा करने वाले होता के लिए-(देवश्रीः) विद्वानों में श्री=लक्ष्मी वाला, (श्रीमनाः) श्री=लक्ष्मी में मन वाला, (शतपयाः) सैकड़ों दुग्ध आदि वस्तुओं वाला यजमान है, वैसे-(देवाः) विद्या-दाता तुम-विद्याओं को ग्रहण करके (यज्ञम्) संग के योग्य गृहाश्रम वा अग्निहोत्र आदि को (आयन्) प्राप्त करो ॥ १७ । ५६ ॥

**[हे मनुष्याः ! यथा······देवश्रीः श्रीमना······यजमानो वर्त्तते तथा देवाः······यज्ञमायन्]**

**भावार्थः**—मनुष्यैः श्रीप्राप्तय उद्योगः सदैव कर्त्तव्यः ।

यथा विद्वांसो धनलब्धये प्रयतेरंस्तद्वदनु प्रयतितव्यम् ॥ १७ । ५६ ॥

**भावार्थ**—मनुष्य श्री=लक्ष्मी की प्राप्ति के लिए सदा उद्योग करें ।

जैसे—विद्वान् धन की प्राप्ति के लिए प्रयत्न करें वैसे अन्य मनुष्य उनका अनुकरण करें ॥

**भाष्यसार**—**यज्ञ कैसे करें ?**—जैसे यज्ञ की इच्छा वाले विद्वान् पुरुष दिव्यगुणों की प्राप्ति के लिए यज्ञ करते हैं और जैसे यजमान दिव्य गुणों वाले होता के लिए, प्रयत्न करके लक्ष्मी

का संग्रह करके घृत दूधादि पदार्थों का संग्रह करता है, वैसे ही दूसरे विद्यादि से शिक्षित होकर और ऐश्वर्यवान् होकर संगमनीय गृहाश्रम-यज्ञ को प्राप्त करें ।। १७ । ५६ ।।

अप्रतिरथः । **यज्ञः=अग्निहोत्रम्** । निचृदार्षी बृहती । मध्यमः ।।

**पुनस्तमेव विषयमाह ।।**

यज्ञ कैसे करना चाहिए, यह फिर उपदेश किया है ।।

**वीतꣳ हविः शमितꣳ शमिता यजध्यै तुरीयो यज्ञो यत्र हव्यमेति ।**
**ततो वाका ऽ आशिषा नो जुषन्ताम् ।। ५७ ।।**

**पदार्थः**—(**वीतम्**) गमनशीलम् (**हविः**) होतव्यम् (**शमितम्**) उपशान्तम् (**शमिता**) उपशमादिगुणयुक्तः (**यजध्यै**) यष्टुम् (**तुरीयः**) चतुर्थः (**यज्ञः**) संगन्तव्यः (**यत्र**) (**हव्यम्**) (**एति**) गच्छति (**ततः**) तस्मात् (**वाकाः**) उच्यन्ते यास्ताः (**आशिषः**) इच्छासिद्धयः (**नः**) अस्मान् (**जुषन्ताम्**) सेवन्ताम् ।। ५७ ।।

**अन्वयः**—हे मनुष्याः ! यः शमिता यजध्यै वीतं हविरग्नौ प्रक्षिपति यस्तुरीयो यज्ञोऽस्ति यत्र हव्यमेति ततो वाका आशिषश्च नो जुषन्तामितीच्छत ।। ५७ ।।

**सपदार्थान्वयः**— **हे मनुष्याः ! यः शमिता** उपशमादिगुणयुक्तः **यजध्यै** यष्टुं **वीतं** गमनशीलं **शमितम्** उपशान्तं **हविः** होतव्यम् **अग्नौ प्रक्षिपति, यस्तुरीयः** चतुर्थः **यज्ञः** सङ्गन्तव्यः **अस्ति, यत्र हव्यमेति** गच्छति, **ततः** तस्माद् **वाकाः** उच्यन्ते यास्ता **आशिषः** इच्छा-सिद्धयः **च नः** अस्मान् **जुषन्तां** सेवन्ताम् **इतीच्छत** ।। १७ । ५७ ।।

**भाषार्थ**—हे मनुष्यो ! जो—(शमिता) उपशम=शान्ति आदि गुणों से युक्त यजमान—(यजध्यै) यज्ञ करने के लिए (वीतम्) गतिशील, (शमितम्) शान्त, (हविः) हवि को अग्नि में डालता है, जो (तुरीयः) चौथा (यज्ञः) संग के योग्य यज्ञ है जहाँ (हव्यम्) हवि (एति) पहुँचती है, (ततः) उससे (वाकाः) वेद की वाणियाँ और (आशिषः) इच्छा-सिद्धियाँ (नः) हमारी (जुषन्ताम्) सेवन करें अर्थात् हमें प्राप्त हो, ऐसी इच्छा करो ।। १७ । ५७ ।।

[हे मनुष्याः···यस्तुरीयो यज्ञो ऽस्ति]

**भावार्थः**—अग्निहोत्रादौ चत्वारः पदार्थाः सन्ति—पुष्कलं पुष्टिसुगन्धिमिष्टगुणयुक्तं रोगनाशकं हविः, तच्छोधनं, यज्ञकर्त्ता, वेद्यग्न्यादिकं चेति,

**भावार्थ**—अग्निहोत्र आदि में चार पदार्थ हैं—पुष्कल पुष्टिकारक, सुगन्धित, मिष्ट=मीठा गुणों से युक्त, रोगनाशक हवि, उसकी शुद्धि, यज्ञ-कर्त्ता=यजमान और वेदि की अग्नि आदि ।

[यत्र हव्यमेति, ततो···आशिषश्च नो जुषन्ताम्]

यथावद्धुतः पदार्थः आकाशं गत्वा पुनरा-वृत्येष्टसाधको भवतीति मनुष्यैर्मन्तव्यम् ।।

यथावत् होम किया हुआ पदार्थ आकाश में जाकर, फिर लौटकर अभीष्ट का साधक होता है, ऐसा मनुष्यों को मानना चाहिए ।।

**भा० पदार्थः**—आशिषः=इष्टसाधिकाः ।

**भाष्यसार—यज्ञ करने की विधि और फल**—यज्ञ करते समय शान्ति आदि गुणों से युक्त यजमान यज्ञ की अग्नि में रोगनाशक तथा पुष्टिकारक शान्त हवि को अग्नि में डाला करे और उस समय उच्चारण किये गये वेद-मन्त्रों से अपनी सत्य मनोकामनाओं को प्राप्त करे ॥ १७ । ५७ ॥

अप्रतिरथः । **अग्निः**=सूर्यलोकः । आर्षी त्रिष्टुप् । धैवतः ॥

**अथ सूर्य्यलोकस्वरूपमाह ॥**

अब सूर्य्यलोक के स्वरूप का कथन किया जाता है ॥

**सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ२ऽ अजस्रम् ।**
**तस्य पूषा प्रसवे याति विद्वान्त्सम्पश्यन्विश्वा भुवनानि गोपाः ॥ ५८ ॥**

**पदार्थः**—(**सूर्यरश्मिः**) (**हरिकेशः**) हरितवर्णः (**पुरस्तात्**) प्रथमतः (**सविता**) सूर्यलोकः (**ज्योतिः**) द्युतिम् (**उत्**) (**अयान्**) (**अजस्रम्**) निरन्तरम् (**तस्य**) (**पूषा**) पुष्टिकर्त्ता (**प्रसवे**) प्रसूते जगति (**याति**) प्राप्नोति (**विद्वान्**) विद्यायुक्तः (**संपश्यन्**) सम्यक् प्रेक्षमाणः (**विश्वा**) सर्वान् (**भुवनानि**) लोकान् (**गोपाः**) पृथिव्यादयो जगद्रक्षकाः ॥ ५८ ॥

**अन्वयः**—हे मनुष्याः ! यः पुरस्तात् सविता ज्योतिः प्रयच्छति यस्मिन् हरिकेशः सूर्यरश्मिर्वर्तते यः प्रसवेऽजस्रं पूषाऽस्ति यं विद्वान् संपश्यन् सन् तद्विद्यां याति तस्य सकाशाद् गोपा विश्वा भुवनान्युदयान् स सूर्यमंडलोऽतिप्रकाशमय इति यूयं वित्त ॥ ५८ ॥

**सपदार्थान्वयः**—हे **मनुष्याः** ! **यः पुरस्तात्** प्रथमतः **सविता** सूर्यलोकः **ज्योतिः** द्युतिं **प्रयच्छति यस्मिन्** **हरिकेशः** हरितवर्णः **सूर्यरश्मिर्वर्तते, यः प्रसवे** प्रसूते=जगति **अजस्रं** निरन्तरं **पूषा** पुष्टिकर्त्ता **अस्ति, यं विद्वान्** विद्यायुक्तः **सम्पश्यन्** सम्यक् प्रेक्षमाणः **सन् तद्विद्यां याति** प्राप्नोति, **तस्य सकाशाद् गोपाः** पृथिव्यादयो जगद्रक्षकाः **विश्वा** सर्वे **भुवनानि** लोकाः **उदयान् स सूर्यमण्डलोऽतिप्रकाशमय इति यूयं वित्त** ॥

**भाषार्थ**—हे मनुष्यो ! जो—(पुरस्तात्) प्रथम से (सविता) सूर्य-लोक (ज्योतिः) द्युति=प्रकाश प्रदान करता है, जिसमें (हरिकेशः) हरित वर्ण की (सूर्यरश्मिः) सूर्य-किरण है, जो—(प्रसवे) जगत् में (अजस्रम्) निरन्तर (पूषा) पुष्टि-कर्त्ता है, जिसे—(विद्वान्) विद्या से युक्त पुरुष (सम्पश्यन्) सम्यक् देखता हुआ सूर्य-विद्या को (याति) प्राप्त करता है, उस से (गोपाः) पृथिवी आदि जगत् के रक्षक (विश्वा) सब (भुवनानि) लोक (उत्+अयान्) उदय होते हैं; वह सूर्य-मण्डल अति प्रकाशमय है; ऐसा तुम जानो ॥ १७ । ५८ ॥

**[सविता···यस्मिन् हरिकेशः सूर्यरश्मिर्वर्तते, तस्य सकाशाद् गोपा विश्वा भुवनान्युदयान्]**

**भावार्थः**—योऽयं सूर्यलोकस्तत्प्रकाशे शुक्लहरितादयोऽनेके किरणाः सन्ति, ये सर्वांल्लोकानभिरक्षन्ति, अतएव सर्वस्य सर्वथा सर्वदा रक्षणं भवतीति वेद्यम् ॥ १७ । ५८ ॥

**भावार्थ**—जो यह सूर्य-लोक है उसके प्रकाश में शुक्ल, हरित आदि रंग की अनेक किरणें हैं, जो सब लोकों की रक्षा करती हैं इसी लिए ही सबकी सब प्रकार से सर्वदा रक्षा होती है; ऐसा समझें ॥ १७ । ५८ ॥

**भा० पदार्थः**—हरिकेशः=शुक्लहरितादयोऽनेके किरणाः । गोपाः=सर्वलोकाभिरक्षकाः ।

**भाष्यसार**—**सूर्य लोक का स्वरूप वर्णन**—गोपाः=पृथिवी आदि जगत् का रक्षक, सूर्य-मण्डल अत्यन्त प्रकाशमय है। पूषा=संसार के पदार्थों को उत्पन्न करके निरन्तर पोषण करने के कारण सूर्य का पूषा नाम है। सूर्य की अनेक वर्णों वाली किरणों में से एक किरण हरित वर्ण की है, जो संसार की अधिक रक्षा करती है ॥ १७ । ५८ ॥

विश्वावसुः । **आदित्यः**=सूर्यः । आर्षी त्रिष्टुप् । धैवतः ॥

**अथेश्वरेण किमर्थः सूर्यो निर्मित इत्युपदिश्यते ॥**

अब ईश्वर ने किसलिए सूर्य का निर्माण किया है, इस विषय का उपदेश किया है ॥

**विमान॑ऽ एष दि॒वो मध्य॑ऽ आस्त ऽ आपप्रि॒वान्रोद॑सी ऽ अ॒न्तरि॑क्षम् ।**
**स वि॒श्वाची॑र॒भिच॑ष्टे घृ॒ताची॑रन्त॒रा पूर्व॒मप॑रं च के॒तुम् ॥ ५९ ॥**

**पदार्थः**—(**विमानः**) विमानमिव स्थितः (**एषः**) सूर्यः (**दिवः**) प्रकाशस्य (**मध्ये**) (**आस्ते**) तिष्ठति (**आपप्रिवान्**) स्वतेजसा व्याप्तवान् (**रोदसी**) प्रकाशभूमी (**अन्तरिक्षम्**) अवकाशम् (**सः**) (**विश्वाचीः**) या विश्वमञ्चन्ति=प्राप्नुवन्ति ता द्युतीः (**अभि**) (**चष्टे**) पश्यति । **चष्ट इति पश्यतिकर्मा ॥ निघं० ३ । ११ ॥** (**घृताचीः**) या घृतमुदकमञ्चन्ति ताः (**अन्तरा**) द्वयोर्मध्ये (**पूर्वम्**) (**अपरम्**) (**च**) (**केतुम्**) प्रज्ञापकं तेजः ॥ १७ । ५९ ॥

**प्रमाणार्थ**—(**चष्टे**) पश्यति । 'चष्टे' यह पद निघं० ३ । ११ में पश्यति-अर्थक क्रियाओं में पठित है ॥

**अन्वयः**—विद्वान् य एष दिवो मध्ये विमानो रोदसी अन्तरिक्षमापप्रिवान् सन्नास्ते स विश्वाचीर्घृताचीर्द्युतीर्विस्तारयति पूर्वमपरमन्तरा च केतुमभिचष्टे तं विजानीयात् ॥ १७ । ५९ ॥

**सपदार्थान्वयः**—**विद्वान् य एषः** सूर्यः **दिवः** प्रकाशस्य **मध्ये विमानः** विमानमिव स्थितः, **रोदसी** प्रकाशभूमी **अन्तरिक्षम्** अवकाशम् **आपप्रिवान्** स्वतेजसा व्याप्तवान् **सन्नास्ते** तिष्ठति, **स विश्वाचीः** या विश्वमञ्चन्ति=प्राप्नुवन्ति ता द्युतीः **घृताचीः** या घृतमुदकमञ्चन्ति ताः **द्युतीर्विस्तारयति, पूर्वमपरमन्तरा** द्वयोर्मध्ये **च केतुं** प्रज्ञापकं तेजः **अभिचष्टे** पश्यति, **तं विजानीयात्** ॥ ५९ ॥

**भाषार्थ**—विद्वान् पुरुष—जो (एषः) यह सूर्य (दिवः) प्रकाश के मध्य में (विमानः) विमान के समान स्थित, (रोदसी) प्रकाश और भूमि को तथा (अन्तरिक्षम्) आकाश को (आपप्रिवान्) अपने तेज से व्याप्त (आस्ते) कर रहा है, (सः) वह—(विश्वाचीः) विश्व को प्राप्त होने वाला एवं (घृताचीः) घृत=जल को प्राप्त कराने वाली द्युति=ज्योतियों का विस्तार करता है, (पूर्वम्) पहले (अपरम्) पीछे और (अन्तरा) मध्य में (केतुम्) प्रज्ञापक तेज को (अभिचष्टे) प्रकाशित करता है—उसे जाने ॥ १७ । ५९ ॥

[**विद्वान् य एष दिवो मध्ये रोदसी अन्तरिक्षमापप्रिवान् सन्नास्ते, स विश्वाचीः**]

**भावार्थः**—यः सूर्यलोको ब्रह्माण्डमध्ये

**भावार्थ**—जो सूर्यलोक ब्रह्माण्ड के मध्य में

स्थितः सन् स्वप्रकाशेन सर्वमभिव्याप्नोति, स सर्वाभिकर्षको वर्तत इति मनुष्यैर्वेद्यम् ॥ १५ । ५६ ॥

स्थित होकर अपने प्रकाश से सबको व्याप्त कर रहा है वह सबका आकर्षक है; ऐसा मनुष्यों को जानना योग्य है ॥ १७ । ५६ ॥

**भा० पदार्थः**—दिवः=ब्रह्माण्डस्य । आपप्रिवान्=स्वप्रकाशेन सर्वमभिव्याप्तवान् । विश्वाचीः=सर्वाभिकर्षकः ॥

**भाष्यसार—सूर्य के निर्माण का प्रयोजन**—यह प्रकाशमय सूर्य द्युलोक और पृथिवीलोक के मध्य आकाश में स्थित है । यह अपनी किरणों से घृताचीः=पृथिवीस्थ जलों का आकर्षण करके वृष्टि का कारण बनता है, और विश्वाचीः=पृथिवी आदि का आकर्षण किये हुए है । और अपने तेज से सबको प्रकाशित करता है ॥ १७ । ५६ ॥

अप्रतिरथः । **आदित्यः**=सूर्यः । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

ईश्वर ने किस लिए सूर्य का निर्माण किया, यह फिर उपदेश किया है ॥

**उ॒क्षा स॑मु॒द्रो ऽ अ॑रु॒णः सु॑प॒र्णः पूर्व॑स्य॒ योनिं॑ पि॒तुरावि॑वेश ।**
**मध्ये॑ दि॒वो निहि॑तः॒ पृश्नि॒रश्मा॒ वि च॑क्रमे॒ रज॑सस्पा॒त्यन्तौ॑ ॥ ६० ॥**

**पदार्थः**—(**उक्षा**) वृष्ट्या सेचकः (**समुद्रः**) सम्यग् द्रवन्त्यापो यस्मात्सः (**अरुणः**) आरक्तः (**सुपर्णः**) शोभनानि पर्णानि=पालनानि यस्मात् (**पूर्वस्य**) पूर्णस्य (**योनिम्**) कारणम् (**पितुः**) उत्पादिकाया विद्युतः (**आ**) (**विवेश**) प्रविशति (**मध्ये**) (**दिवः**) प्रकाशमयस्य (**निहितः**) ईश्वरेण स्थापितः (**पृश्निः**) विचित्रवर्णः सूर्य्यः (**अश्मा**) अश्नुते=व्याप्नोति स मेघः । **अश्मेति मेघना० ॥ निघं० १ । १० ॥** (**वि**) (**चक्रमे**) विविधतया क्रमते (**रजसः**) लोकान् (**पाति**) रक्षति (**अन्तौ**) बन्धने ॥ ६० ॥

**प्रमाणार्थ**—(**अश्मा**) यह पद निघं० १ । १० में मेघ-नामों में पठित है ॥

**अन्वयः**—हे मनुष्याः ! य ईश्वरेण दिवो मध्ये निहित उक्षा समुद्रोऽरुणः सुपर्णः पृश्निरश्मा मेघश्च रजसोऽन्तौ विचक्रमे पाति च पूर्वस्य पितुर्योनिमाविवेश स सम्यगुपयोक्तव्यः ॥ ६० ॥

**सपदार्थान्वयः**—हे **मनुष्याः ! य ईश्वरेण दिवः** प्रकाशमयस्य **मध्ये निहितः** ईश्वरेण स्थापितः, **उक्षा** वृष्टया सेचकः, **समुद्रः** सम्यग् द्रवन्त्यापो यस्मात्सः, **अरुणः** आरक्तः **सुपर्णः** शोभनानि पर्णानि=पालनानि यस्मात्, **पृश्निः** विचित्रवर्णः सूर्य्यः **अश्मा=मेघश्च** अश्नुते=व्याप्नोति स मेघः **च रजसः** लोकान् **अन्तौ** बन्धने **विचक्रमे** विविधतया क्रमते **पाति** रक्षति **च, पूर्वस्य** पूर्णस्य **पितुः** उत्पादिकाया विद्युतः **योनिं** कारणम् **आविवेश**, प्रविशति **स सम्यगुपयोक्तव्यः** ॥

**भाषार्थ**—हे मनुष्यो ! जो ईश्वर से—(दिवः) प्रकाशमय द्युलोक के (मध्ये) मध्य में (निहितः) स्थापित किया हुआ, (उक्षा) वृष्टि से सींचने वाला, (समुद्रः) जलों को द्रवित करने वाला, (अरुणः) थोड़ा लाल रंग वाला, (सुपर्णः) उत्तम पालन का हेतु, (पृश्निः) विचित्र वर्ण वाला सूर्य और (अश्मा) आकाश को व्याप्त करने वाला मेघ (रजसः) लोकों को (अन्ते) बन्धन में (विचक्रमते) विविध गति देता है और उनकी (पाति) रक्षा करता है, तथा—(पूर्वस्य) पूर्ण, (पितुः) उत्पादक विद्युत् के (योनिम्) कारण में (आ-

विवेश) प्रविष्ट है, उसका ठीक उपयोग करना चाहिए ॥ १७ । ६० ॥

[हे मनुष्याः ! य ईश्वरेण दिवो मध्ये निहितः'''सुपर्णः पृश्निरश्मा च रजसोऽन्तौ विचक्रमे, पाति च]

**भावार्थः**—मनुष्यैरीश्वरस्यानेके धन्यवादा वाच्याः, कुतः ? येन स्वविज्ञापनाय जगत्पालन-निमित्तः सूर्यादिदृष्टान्तः प्रदर्शितः । स कथं न सर्व-शक्तिमान् भवेत् ? ॥ १७ । ६० ॥

**भावार्थ**—मनुष्य ईश्वर को अनेक धन्यवाद दें, क्योंकि—जिसने अपने विज्ञापन के लिए जगत् के पालन का निमित्त सूर्य आदि का दृष्टान्त प्रदर्शित किया है, वह कैसे सर्वशक्तिमान् न हो ? ॥ १७ । ६० ॥

**भा० पदार्थः**—सुपर्णः=जगत्पालननिमित्तः ।

**भाष्यसार**—**सूर्य के निर्माण का प्रयोजन**—द्युलोक में विद्यमान सूर्य अश्मा=सब आकाश को प्रकाश से व्याप्त कर लेता है । उक्षा=सूर्य जलों को द्रवित करके वृष्टि कराता है । अरुणः=यह लाल किरण से रोगादि का निवारण करके सबको पालता है । यह पृथिवी चन्द्रादि लोकों का आकर्षण करता है, विविध प्रकार की गति देता है । और विद्युत् के कारण जल में प्रवेश करता है ॥ १७ । ६० ॥

मधुच्छन्दाः सुतजेता । **इन्द्रः=ईश्वरः** । निचृदार्ष्यनुष्टुप् । गान्धारः ॥

**पुनर्जगत्स्रष्टुरीश्वरस्य गुणानाह ॥**

फिर जगत् बनाने वाले ईश्वर के गुणों का उपदेश किया है ॥

**इन्द्रं विश्वा॑ऽ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ । र॒थीत॑मꣳ र॒थीनां॒ वाजा॑ना॒ꣳ सत्प॑तिं॒ पति॑म् ॥ ६१ ॥**

**पदार्थः**—(**इन्द्रम्**) परमात्मानम् (**विश्वाः**) सर्वाः (**अवीवृधन्**) वर्धयन्तु (**समुद्रव्यचसम्**) समुद्रस्यान्तरिक्षस्य व्यचा=व्याप्तिरिव व्याप्तिर्यस्य तम् (**गिरः**) वाचः (**रथीतमम्**) प्रशस्ता रथा=सुखहेतवः पदार्था विद्यन्ते यस्मिन्सोऽतिशयितस्तम् (**रथीनाम्**) प्रशस्तरथयुक्तानाम् (**वाजानाम्**) ज्ञानादि-गुणयुक्तानां जीवानाम् (**सत्पतिम्**) सदविनाशी चासौ पतिः=पालकश्च यद्वा सतामविनाशिनां कारणानां जीवानां च पालकस्तम् (**पतिम्**) स्वामिनम् ॥ १७ । ६१ ॥

**अन्वयः**—हे मनुष्याः ! यूयं यं समुद्रव्यचसं रथीनां रथीतमं वाजानां पतिं सत्पतिमिन्द्रं परमात्मानं विश्वा गिरोऽवीवृधँस्तं सततमुपाध्वम् ॥ ६१ ॥

**सपदार्थान्वयः**—**हे मनुष्याः ! यूयं यं समुद्रव्यचसं** समुद्रस्यान्तरिक्षस्य व्यचा=व्याप्तिरिव व्याप्तिर्यस्य तं, **रथीनां** प्रशस्तरथयुक्तानां **रथीतमं** प्रशस्ता रथा=सुखहेतवः पदार्था विद्यन्ते यस्मिन्सोऽतिशयितस्तं, **वाजानां** ज्ञानादिगुणयुक्तानां जीवानां **पतिं** स्वामिनं, **सत्पतिं** सदविनाशी चासौ पतिः=पालकश्च यद्वा सतामविनाशिनां कारणानां जीवानां च पालकस्तं **इन्द्रं**=**परमात्मानं विश्वाः** सर्वाः **गिरः** वाचः **अवीवृधन्** वर्धयन्तु, तं **सततमुपाध्वम्** ॥६१॥

**भाषार्थ**—हे मनुष्यो ! तुम—जिस (समुद्रव्यचसम्) समुद्र=आकाश की व्याप्ति के समान व्याप्ति वाले, (रथीनाम्) प्रशस्त रथ=सुख से युक्त पदार्थों में (रथीतमम्) अत्यन्त सुख-दायक, (वाजानाम्) ज्ञान आदि गुणों से युक्त जीवों के (पतिम्) स्वामी, (सत्पतिम्) सत्=अविनाशी और पति=पालक अथवा—सत्=अवि-नाशी कारण [प्रकृति] और जीवों का पालक (इन्द्रम्) परमात्मा को (विश्वाः) सब (गिरः) वेद-

वाणियाँ (अवीवृधन्) स्तुति करती हैं; उसकी सदा उपासना करो ॥ १७ । ६१ ॥

**[हे मनुष्याः ! यूयं यम्……इन्द्रं=परमात्मनं विश्वा गिरोऽवीवृधन्, तं सततमुपाध्वम्]**

**भावार्थः**—सर्वैर्मनुष्यैः—यं सर्वे वेदाः प्रशंसन्ति, यं योगिन उपासते, यं प्राप्य मुक्ता आनन्दं भुञ्जते, स एव उपास्य इष्टो देवो मन्तव्यः ॥ १७ । ६१ ॥

**भावार्थ**—सब मनुष्य—जिसकी सब वेद प्रशंसा करते हैं, जिसकी योगी लोग उपासना करते हैं, जिसको प्राप्त करके मुक्त लोग आनन्द को भोगते हैं; उसे ही उपास्य इष्ट देव मानें ॥ ६१ ॥

**भा० पदार्थः**—गिरः=वेदाः ।

**भाष्यसार**—**ईश्वर के गुण का वर्णन**—ईश्वर आकाश के समान सब स्थानों पर व्यापक है, रमणीय, प्रशस्त तथा सुख देने वाले पदार्थों में सर्वश्रेष्ठ है, ज्ञान और बलों का रक्षक है, अविनाशी जगत् के कारण रूपी प्रकृति तथा जीवों का पालक है। उस परमेश्वर की सब वेद वाणियाँ स्तुति करती हैं ॥ १७ । ६१ ॥

विधृतिः । **यज्ञः=ईश्वरः** । विराडार्ष्यनुष्टुप् । गान्धारः ॥

**पुनरीश्वरः कीदृशोऽस्तीत्याह ॥**

फिर ईश्वर कैसा है, यह उपदेश किया है ॥

**देवहूर्यज्ञ आ च वक्षत्सुम्नहूर्यज्ञ ऽआ च वक्षत् । यक्षदग्निर्देवो देवाँ२ऽआ च वक्षत् ॥ ६२ ॥**

**पदार्थः**—(देवहूः) देवान्=विदुष आह्वयति सः (**यज्ञः**) पूजनीयः (**आ**) (**च**) (**वक्षत्**) प्रापयेत् (**सुम्नहूः**) यः सुम्नानि=सुखान्याह्वयति सः (**यज्ञः**) संगन्तव्यः (**आ**) (**च**) (**वक्षत्**) (**यक्षत्**) यजेद्द्यात् (**अग्निः**) स्वयंप्रकाशः (**देवः**) सकलसुखदातेश्वरः (**देवान्**) दिव्यान् गुणान् भोगान् वा (**आ**) (**च**) (**वक्षत्**) प्रापयेत् ॥ ६२ ॥

**अन्वयः**—हे मनुष्याः ! यो देवहूर्यज्ञ ईश्वरोऽस्मान् सत्यमावक्षत् । चादसत्यादुद्धरेत् । यः सुम्नहूर्यज्ञोऽस्मभ्यं सुखान्यावक्षत् । दुःखानि च नाशयेत् । योऽग्निर्देवोऽस्मान् देवान् यक्षदावक्षच्च तं भवन्तः सततं सेवन्ताम् ॥ ६२ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! यो **देवहूः** देवान्=विदुष आह्वयति सः **यज्ञः=ईश्वरः** पूजनीयः **अस्मान् सत्यमावक्षत्** प्रापयेत्, **चादसत्यादुद्धरेत्** ।

**यः सुम्नहूः** यः सुम्नानि=सुखान्याह्वयति सः **यज्ञः** सङ्गन्तव्यः **अस्मभ्यं सुखान्यावक्षत्** प्रापयेत्, **दुःखानि च नाशयेत्** ।

**योऽग्निः** स्वयंप्रकाशः देवः सकलसुखदातेश्वरः **अस्मान् देवान्** दिव्यान् गुणान् भोगान् वा **यक्षद्**

**भाषार्थ**—हे मनुष्यो—जो (देवहूः) विद्वानों का आह्वान करने वाला (यज्ञः) पूजनीय ईश्वर है वह हमें सत्य को (आवक्षत्) प्राप्त करावे (च) और असत्य से निकाले ।

जो (सुम्नहूः) सुम्न=सुखों को प्राप्त कराने वाला (यज्ञः) संग के योग्य ईश्वर है वह हमें सुख (अवक्षत्) प्राप्त करावे (च) और दुःखों का नाश करे ।

जो (अग्निः) प्रकाशस्वरूप (देवः) सकल सुखदाता ईश्वर है वह हमें (देवान्) दिव्य गुणों वा

यजेद्द्यात् **आवक्षत्** प्रापयेत् **च, तं भवन्तः सततं सेवन्ताम्** ॥ १७ । ६२ ॥

भोगों को (यक्षत्) प्रदान करे, और (आवक्षत्) प्राप्त करावे; उसे आप निरन्तर सेवन करो ॥ १७ । ६२ ॥

[ हे मनुष्याः ! यो देवहूर्यज्ञः, यः सुम्नहूः, यो···देवोऽस्मान् देवान् ··· आवक्षत्···तं भवन्तः सततं सेवन्ताम् ]

**भावार्थः**—आप्तैर्विद्वद्भिरुपास्यते, यश्च सुखस्वरूपः, मङ्गलप्रदः, परमेश्वरोऽस्ति; तं समाधियोगेन मनुष्या उपासीरन् ॥ १७ । ६२ ॥

**भावार्थ**—जिसकी आप्त विद्वान् लोग उपासना करते हैं और जो सुखस्वरूप, मङ्गलप्रद परमेश्वर है उसकी मनुष्य समाधि योग से उपासना करें ॥ १७ । ६२ ॥

**भा० पदार्थः**—देवहूः=आप्तैर्विद्वद्भिरुपास्यते यः सः । सुम्नहूः=सुखस्वरूपः । देवः=मङ्गलप्रदः । यज्ञः=परमेश्वरः ॥

**भाष्यसार**—**ईश्वर के गुणों का वर्णन**—देवहू !=सब दिव्यगुणों का प्रापक यज्ञ रूप ईश्वर सत्य को प्राप्त कराता है और असत्य से पृथक् करता है, सब मोक्षादि सुखों का प्रापक उपासनीय ईश्वर सुखों को देता है और दुःखों से पृथक् करता है । वह प्रकाशस्वरूप है, देवों का भी देव है और सब दिव्य गुणों और भोगों को प्रदान करता है ॥ १७ । ६२ ॥

विधृतिः । **इन्द्रः=ईश्वरः—सेनापतिः** । विराडार्ष्यनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

ईश्वर कैसा है, यह फिर उपदेश किया है ॥

**वाजस्य मा प्रसव ऽ उद्ग्राभेणोदग्रभीत् । अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२ऽ अकः ॥ ६३ ॥**

**पदार्थः**—(**वाजस्य**) विज्ञानस्य (**मा**) माम् (**प्रसवः**) उत्पादकः (**उद्ग्राभेण**) उत्कृष्टतया गृह्णाति येन तेन (**उत्**) (**अग्रभीत्**) (**अध**) अथ । **अत्र निपातस्य चेति दीर्घः** । (**सपत्नान्**) शत्रून् (**इन्द्रः**) पतिः (**मे**) मम (**निग्राभेण**) निग्रहेण (**अधरान्**) अधःपतितान् (**अकः**) कुर्यात् ॥ ६३ ॥

**प्रमाणार्थ**—(**अध**) यहाँ 'निपातस्य च' (६ । ३ । १३६) से मन्त्र में दीर्घ है ॥

**अन्वयः**—हे मनुष्याः ! यथेन्द्रो वाजस्य प्रसवो मा मामुद्ग्राभेणोदग्रभीत् । तथाऽधाऽथ यो मे मम सपत्नान् निग्राभेणाधरानकस्तं यूयमपि सेनापतिं कुरुत ॥ ६३ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! यथेन्द्रः पतिः **वाजस्य** विज्ञानस्य **प्रसवः** उत्पादकः **मा**=मामुद्ग्राभेण उत्कृष्टतया गृह्णाति येन तेन **उदग्रभीत्**, तथा ऽध=ऽथ **यो मे**=मम **सपत्नान्** शत्रून् **निग्राभेण** निग्रहेण **अधरान्** अधःपतितान् **अकः** कुर्यात्, **तं यूयमपि सेनापतिं कुरुत** ॥

**भाषार्थ**—हे मनुष्यो ! जैसे—(इन्द्रः) पति=ईश्वर (वाजस्य) विज्ञान का (प्रसवः) उत्पादक (मा) मुझे (उद्ग्राभेण) ग्रहण करने की उत्तम रीति से (उदग्रभीत्) ग्रहण करता है वैसे (अध) और—जो (मे) मेरे (सपत्नान्) शत्रुओं को (निग्राभेण) निग्रह=गिरफ्तार करके (अधरान्) अपने अधीन (अकः) करे उसे तुम सेनापति बनाओ ॥ १७ । ६३ ॥

[हे मनुष्याः ! यथेन्द्रः'''मा=मामुद्ग्राभेणोदग्रभीत् मे=मम सपत्नान् निग्राभेणाधरानकः]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः। यथेश्वरस्तथा ये मनुष्याः पालनाय धार्मिकान् मनुष्यान् संगृह्णन्ति, ताडनाय दुष्टाँश्च निगृह्णन्ति,

[तं'''सेनापतिं कुरुत]

त एव राज्यं कर्त्तुं शक्नुवन्ति ॥ १७ । ६३ ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलंकार है ॥ जैसा ईश्वर है वैसे जो मनुष्य पालन के लिए धार्मिक मनुष्यों को ग्रहण करते हैं और ताडन के लिए दुष्टों को वश में करते हैं—

वे ही राज्य कर सकते हैं ॥ १७ । ६३ ॥

**भा० पदार्थः**—इन्द्रः=ईश्वरः।

**भाष्यसार**—**ईश्वर और सेनापति का समान कर्म**—जैसे परमैश्वर्य-सम्पन्न विज्ञान का उत्पादक ईश्वर सज्जनों का ग्रहण=पालन, और दुष्टों का निग्रह करके दण्ड देता है, वैसे ही सेनापति ऐश्वर्य सम्पन्न होकर, विज्ञान के आश्रय से शस्त्रास्त्रों का निर्माण करके, शत्रुओं का बन्धन करके धार्मिक-प्रजा की रक्षा किया करे ॥ १७ । ६३ ॥

विधृतिः। **इन्द्राग्नी**=सभासेनापती। आर्ष्यनुष्टुप्। गान्धारः ॥

**पुनरग्रे राजधर्म उपदिश्यते ॥**

फिर आगे राजधर्म का उपदेश किया जाता है ॥

उद्ग्राभं च निग्राभं च ब्रह्म देवा ऽअवीवृधन्।
अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥ ६४ ॥

**पदार्थः**—(**उद्ग्राभम्**) उत्कृष्टतया ग्रहणम् (**च**) (**निग्राभम्**) निग्रहम् (**च**) (**ब्रह्म**) धनम् (**देवाः**) विद्वांसः (**अवीवृधन्**) वर्धयन्तु (**अध**) अथ। **अत्र निपातस्य चेति दीर्घः** (**सपत्नान्**) अरीन् (**इन्द्राग्नी**) विद्युत्पावकान्ताविव सेनापती (**मे**) मम (**विषूचीनान्**) विरुद्धमाचरतः (**वि**) (**अस्यताम्**) ॥ ६४ ॥

**प्रमाणार्थ**—(**अध**) यहाँ 'निपातस्य च' (६ । ३ । १३६) से मन्त्र में दीर्घ है ॥

**अन्वयः**—देवा उद्ग्राभं च निग्राभं च कृत्वा ब्रह्मावीवृधन्। अधाथ सेनापती इन्द्राग्नी इव मे विषूचीनान्सपत्नान् व्यस्यतामुत्क्षिपताम् ॥ ६४ ॥

**सपदार्थान्वयः**—**देवाः** विद्वांसः **उद्ग्राभम्** उत्कृष्टतया ग्रहणम् **च निग्राभं** निग्रहं **च कृत्वा ब्रह्म** धनम् **अवीवृधन्** वर्धयन्तु।

**अध**=**अथ सेनापती इन्द्राग्नी** विद्युत्पावकान्ताविव सेनापती **इव मे** मम **विषूचीनान्** विरुद्धमाचरतः **सपत्नान्** अरीन् **व्यस्यताम्**=**उत्क्षिपताम्** ॥ १७ । ६४ ॥

**भाषार्थ**—(देवाः) विद्वान् लोग (उदग्राभम्) धार्मिकों का ग्रहण (च) और (निग्राभम्) दुष्टों का निग्रह करके (ब्रह्म) धन को (अवीवृधन्) बढ़ावें।

(अध) और—(इन्द्राग्नी) अन्त करने वाले विद्युत् और पावक=अग्नि के तुल्य सेनापति और सभापति के समान (मे) मेरे (विषूचीनान्) विरुद्ध आचरण करने वाले (सपत्नान्) शत्रुओं को (व्यस्यताम्) दूर फैंक देवें ॥ १७ । ६४ ॥

[देवा उद्ग्राभं च निग्राभं च कृत्वा ब्रह्मावीवृधन्]

**भावार्थः**—ये मनुष्याः सज्जनान् सत्कृत्य, दुष्टान् निहत्य ब्रह्म वर्द्धयित्वा निष्कण्टकं राज्यं संपादयन्ति, त एव प्रशंसिताः ।

**भावार्थ**—जो मनुष्य सज्जनों का सत्कार, दुष्टों की हत्या, और ब्रह्म=धन को बढ़ा कर राज्य को निष्कंटक बनाते हैं, वे ही प्रशंसनीय हैं ।

[सेनापती इन्द्राग्नी इव```सपत्नान् व्यस्यताम्]

यो राजा राष्ट्रवासिनः सज्जनान् सत्कृत्य, दुष्टान् निरस्यैश्वर्यं वर्धयति, तस्यैव सभासेनापती शत्रुनाशं कर्तुं शक्नुयाताम् ॥ १७ । ६४ ॥

जो राजा राष्ट्रवासी सज्जनों का सत्कार कर, दुष्टों को दूर हटाकर ऐश्वर्य को बढ़ाता है उस के ही सभापति और सेनापति शत्रुओं का नाश कर सकते हैं ॥ १७ । ६४ ॥

**भा० पदार्थः**—इन्द्राग्नी=सभासेनापती । सपत्नान्=दुष्टान् ॥

**भाष्यसार**—**सभापति और सेनापति का समान कर्त्तव्य**—धार्मिक श्रेष्ठ पुरुषों की रक्षा करके और दुष्टों का बन्धन करके वेद विद्या रूपी धन को बढ़ाना सभापति और सेनापति का मुख्य कर्म है। और जो वेद-विरुद्ध आचरण करने वाले शत्रु हों, उनको विद्युत् अथवा अग्नि के समान तेजस्वी होकर नष्ट कर देवें ॥ १७ । ६४ ॥

विधृतिः । **अग्निः=राजपुरुषः** । विराडार्ष्यनुष्टुप् । गान्धारः ।

**पुनस्तमेव विषयमाह ॥**

राजधर्म का फिर उपदेश किया है ॥

क्रम॑ध्वम॒ग्निना॒ नाक॒मुख्य॒ꣳ हस्ते॑षु॒ बिभ्र॑तः । दि॒वस्पृ॒ष्ठꣳ स्व॑र्ग॒त्वा मि॒श्रा दे॒वेभि॑राध्वम् ॥ ६५ ॥

**पदार्थः**—(क्रमध्वम्) पराक्रमं कुरुत (**अग्निना**) विद्युता (**नाकम्**) अविद्यमानदुःखम् (उख्यम्) उखायां संस्कृतं भक्ष्यमोदनादिकम् । **अत्र शूलोखाद्यत् ॥ अ० ४ । २ । १६ ॥ अनेन संस्कृतं भक्षा इत्यर्थे यत्** (**हस्तेषु**) (**बिभ्रतः**) धरन्तः (**दिवः**) न्यायविनयादिप्रकाशजातस्य (**पृष्ठम्**) ज्ञीप्सितम् (**स्वः**) सुखम् (**गत्वा**) प्राप्य (**मिश्राः**) मिलिताः (**देवेभिः**) विद्वद्भिः (**आध्वम्**) उपविशत ॥ ६५ ॥

**प्रमाणार्थ**—(**उख्यम्**) यहाँ 'शूलोखाद्यत्' (४ । २ । १६) से 'संस्कृतं भक्षाः' इस अर्थ में यत् प्रत्यय है ॥

**अन्वयः**—हे वीराः ! यूयमग्निना नाकमुख्यं च हस्तेषु बिभ्रतो धरन्तः क्रमध्वं देवेभिर्मिश्राः सन्तो दिवस्पृष्ठं स्वर्गत्वाध्वम् ॥ १७ । ६५ ॥

**सपदार्थान्वयः**—हे वीराः ! यूय**मग्निना** विद्युता **नाकम्** अविद्यमानदुःखम् **उख्यम्** उखायां संस्कृतं भक्ष्यमोदनादिकं **च हस्तेषु बिभ्रतः**=धरन्तः **क्रमध्वं** पराक्रमं कुरुत ।

**देवेभिः** विद्वद्भिः **मिश्राः** मिलिताः **सन्तो दिवः** न्यायविनयादिप्रकाशजातस्य **पृष्ठं** ज्ञीप्सितं **स्वः**

**भावार्थ**—हे वीरो ! तुम—(अग्निना) विद्युत् से (नाकम्) सुखकारक (उख्यम्) और उखा=स्थाली में संस्कृत भक्ष्य ओदन आदि को (हस्तेषु) हाथों में (बिभ्रतः) धारण करते हुए (क्रमध्वम्) पराक्रम करो । और—

(देवेभिः) विद्वानों से (मिश्राः) मिलकर (दिवः) न्याय, विनय आदि प्रकाश के (पृष्ठम्) जानने के

सुखं **गत्वा** प्राप्य **आध्वम्** उपविशत ॥ १७ । ६५ ॥

योग्य (स्वः) सुखको (गत्वा) प्राप्त करके (आध्वम्) बैठो ॥ १७ । ६५ ॥

**[ हे वीराः ! यूयमग्निना···क्रमध्वम्, देवैर्भिमिश्राः सन्तः ]**

**भावार्थः**—राजपुरुषा विद्वद्भिः सह संप्रयोगेणाग्नेयास्त्रादिना शत्रुषु पराक्रमन्ताम् ।

**भावार्थ**—राजपुरुष विद्वानों के साथ मिल कर आग्नेय-अस्त्र आदि से शत्रुओं पर पराक्रम करें ।

**[ स्वर्गत्वाऽऽध्वम् ]**

स्थिरं सुखं प्राप्य पुनः पुनः प्रयतेरन् ॥१७।६५॥

स्थिर सुखको प्राप्त करके पुनः प्रयत्न करें ॥ १७ । ६५ ॥

**भा० पदार्थः**—अग्निना=आग्नेयास्त्रादिना । क्रमध्वम्=पराक्रमध्वम् । स्वः=स्थिरं सुखम् । आध्वम्=पुनः पुनः प्रयतध्वम् ॥

**भाष्यसार—राज-धर्म का वर्णन**—युद्ध के समय वीर सैनिक इतने शत्रुओं से सतर्क रहें कि भोजन हाथों में लेकर, घोड़े आदि की पीठ पर बैठकर ही खाते हुए युद्ध करते रहें और विद्वानों के सहयोग से न्यायादि गुणों का विस्तार करके सुखों की वृद्धि किया करे ॥ १७ । ६५ ॥

विधृतिः । **अग्निः=सभेशः** । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

राजधर्म का फिर उपदेश किया है ॥

**प्राचीमनु प्रदिशं प्रेहिं विद्वानग्नेरग्ने पुरो ऽ अग्निर्भवेह ।**
**विश्वा ऽ आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ ६६ ॥**

**पदार्थः**—(**प्राचीम्**) पूर्वाम् (**अनु**) (**प्रदिशम्**) प्रकृष्टां दिशम् (**प्र**) (**इहि**) प्राप्नुहि (**विद्वान्**) (**अग्नेः**) आग्नेयास्त्रादियोगात् (**अग्ने**) शत्रुदाहक (**पुरोअग्निः**) अग्रगन्ता पावक इव (**भव**) (**इह**) अस्मिन् राज्यकर्मणि (**विश्वाः**) अखिलाः (**आशाः**) दिशः । आशा इति दिङ्ना० ॥ निघं० १ । ६ ॥ (**दीद्यानः**) देदीप्यमानः सूर्य्य इव (**वि, भाहि**) प्रकाशय (**ऊर्ज्जम्**) अन्नादिकम् (**नः**) अस्माकम् (**धेहि**) (**द्विपदे**) मनुष्याद्याय (**चतुष्पदे**) गवाद्याय ॥ १७ । ६६ ॥

**प्रमाणार्थ**—(आशाः) दिशः । 'आशा' यह पद निघं० १ । ६ में दिशा-नामों में पठित है ॥

**अन्वयः**—हे अग्ने सभेश ! त्वं प्राचीं प्रदिशमनुप्रेहि त्वमिहाग्नेः पुरो अग्निरिव विद्वान् भव । विश्वा आशा दीद्यानः सन् नोऽस्माकं द्विपदे चतुष्पदे ऊर्ज्जं धेहि विद्याविनयपराक्रमैरभयं विभाहि ॥ ६६ ॥

**सपदार्थान्वयः**—हे **अग्ने**=सभेशः शत्रुदाहक ! **त्वं प्राचीं** पूर्वां **प्रदिशं** प्रकृष्टां दिशम् **अनुप्रेहि** प्राप्नुहि ।

**भाषार्थ**—हे (अग्ने) ! शत्रुओं के दाहक= जलाने वाले सभापति ! तू—(प्राचीम्) पूर्व की (प्रदिशम्) उत्तम दिशा को (अनुप्रेहि) प्राप्त कर ।

**त्वमिह** अस्मिन् राज्यकर्मणि **अग्नेः** आग्नेया-

तू (इह) इस राज्य-कर्म में (अग्नेः) आग्नेय

स्त्रादियोगात् **पुरो अग्निः** अग्रगन्ता पावकः **इव विद्वान् भव।**

**विश्वाः** अखिलाः **आशाः** दिशः **दीद्यानः** देदीप्यमानः सूर्य्य इव **सन् नो**=ऽस्माकं **द्विपदे** मनुष्याद्याय **चतुष्पदे** गवाद्यायं **ऊर्ज्जम्** अन्नादिकं **धेहि, विद्याविनयपराक्रमैरभयं विभाहि** प्रकाशय ॥ १७ । ६६ ॥

अस्त्र आदि के योग से (पुरो अग्निः) अग्रगामी अग्नि के समान विद्वान् बन।

(विश्वाः) सब (आशाः) दिशाओं को (दीद्यानः) सूर्य के समान देदीप्यमान करता हुआ (नः) हमारे (द्विपदे) मनुष्य आदि तथा (चतुष्पदे) गौ आदि के लिए (ऊर्ज्जम्) अन्न आदि को (धेहि) धारण कर; विद्या, विनय और पराक्रम से अभय को (विभाहि) प्रकाशित कर॥ १७ । ६६ ॥

[हे अग्ने !······त्वमिह······अग्निरिव विद्वान् भव, विश्वा आशा दीद्यानः······द्विपदे चतुष्पदे ऊर्जं धेहि]

**भावार्थः**—ये पूर्णेन ब्रह्मचर्येण सर्वा विद्या अभ्यस्य, युद्धविद्यां विदित्वा, सर्वासु दिक्षु स्तूयन्ते, ते मनुष्याणां पश्वादीनां च भक्ष्यभोज्यमुन्नीय, रक्षां विधायानन्दिता भवन्तु ॥ १७ । ६६ ॥

**भावार्थ**—जो पूर्ण ब्रह्मचर्य से सब विद्याओं का अभ्यास करके, युद्ध-विद्या को जानकर सब दिशाओं में स्तुति को प्राप्त होते हैं वे मनुष्यों के भक्ष्य पदार्थ और पशुओं के भोज्य पदार्थों को बढ़ा, तथा रक्षा करके आनन्दित रहें ॥ १७ । ६६ ॥

**भा० पदार्थः**—विश्वाः=सर्वाः । दीद्यानः=स्तूयमानः । ऊर्जम्=भक्ष्यभोज्यम् ॥

**भाष्यसार—सभापति का कर्त्तव्य**—अग्नि के समान शत्रुओं का दाहक बनकर सभापति अस्त्रादि से सम्पन्न होने के कारण सब दिशाओं में प्रकाशित रहे, सभी राज्य के कार्यों में अग्नि के समान आगे चलने वाला हो, सब दिशाओं को, सूर्य के समान विद्या, विनय और पराक्रम से प्रकाशित होकर अभय से युक्त करे, और दो पैर वाले मनुष्यादि तथा चार पैर वाले गायादि प्राणियों के लिए पर्याप्त मात्रा में अन्नादि को धारण करने वाला हो॥ १७ । ६६ ॥

विधृतिः । **अग्निः=योगी** । पिपीलिकामध्या बृहती । मध्यमः ॥

**पुनर्योगिगुणा उपदिश्यन्ते ॥**

फिर योगियों के गुणों का उपदेश किया जाता है ॥

**पृथिव्या ऽ अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ।**
**दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ॥ ६७ ॥**

**पदार्थः**—(**पृथिव्याः**) भूमेर्मध्ये (**अहम्**) (**उत्**) (**अन्तरिक्षम्**) आकाशम् (**आ**) (**अरुहम्**) रोहेयम् (**अन्तरिक्षात्**) आकाशात् (**दिवम्**) प्रकाशमानं सूर्यम् (**आ**) (**अरुहम्**) समन्ताद्रोहेयम् (**दिवः**) द्योतमानस्य (**नाकस्य**) सुखनिमित्तस्य (**पृष्ठात्**) समीपात् (**स्वः**) सुखम् (**ज्योतिः**) ज्ञानप्रकाशम् (**अगाम्**) प्राप्नुयाम् (**अहम्**) ॥ ६७ ॥

**अन्वयः**—हे मनुष्याः ! यथा कृतयोगाङ्गानुष्ठानसंयमसिद्धोऽहं पृथिव्या अन्तरिक्षमुदारुहमन्तरिक्षाद्दिवमारुहं नाकस्य दिवः पृष्ठात् स्वर्ज्योतिश्चाहमगां तथा यूयमप्याचरत ॥ ६७ ॥

**सपदार्थान्वयः**—हे मनुष्याः !

**भाषार्थ**—हे मनुष्यो ! जैसे—योगाङ्गों

**यथा** कृतयोगाङ्गानुष्ठानसंयमसिद्धोऽहं **पृथिव्याः** भूमेर्मध्ये **अन्तरिक्षम्** आकाशम् **उद्-आ-अरुहं** रोहेयम्, **अन्तरिक्षाद्** आकाशाद् **दिवं** प्रकाशमानं सूर्यम् **आ-अरुहं** समन्ताद्रोहेयं, **नाकस्य** सुखनिमित्तस्य **दिवः** द्योतमानस्य **पृष्ठात्** समीपात् **स्वः** सुखं **ज्योतिः** ज्ञानप्रकाशं **चाहमगां** प्राप्नुयां, **तथा यूयमप्याचरत** ॥ १७ । ६७ ॥

के अनुष्ठान एवं संयम से सिद्ध योगी मैं—(पृथिव्याः) पृथिवी से (अन्तरिक्षम्) आकाश में (उद्+आ+अरुहम्) आरोहण करूँ, (अन्तरिक्षात्) आकाश से (दिवम्) प्रकाशमान सूर्य में (आ+अरुहम्) आरोहण करता हूँ; (नाकस्य) सुख के निमित्त (दिवः) प्रकाशमान द्युलोक के (पृष्ठात्) समीप से (स्वः) सुख और (ज्योतिः) ज्ञान-प्रकाश को (अहम्) मैं (अगाम्) प्राप्त करूँ वैसे तुम भी करो ॥ १७ । ६७ ॥

[कृतयोगाङ्गानुष्ठानसंयमसिद्धोऽहं पृथिव्या अन्तरिक्षमुदारुहम्......]

**भावार्थः**—यदा मनुष्यः स्वात्मना सह परमात्मानं युङ्क्ते तदाऽणिमादयः सिद्धयः प्रादुर्भवन्ति, ततो ऽव्याहतगत्याभीष्टानि स्थानानि गन्तुं शक्नोति; नान्यथा ॥ १७ । ६७ ॥

**भावार्थ**—जब मनुष्य अपने आत्मा के साथ परमात्मा को युक्त करता है तब अणिमा आदि सिद्धियाँ प्रकट होती हैं, उससे अव्याहत-गति से अभीष्ट स्थानों में जा सकता है; अन्यथा नहीं ॥ १७ । ६७ ॥

**भाष्यसार**—**योगी के गुणों का वर्णन**—जब योगाभ्यास के द्वारा योगी अपनी आत्मा का सम्बन्ध परमात्मा से कर लेता है तो वह अणिमादि के द्वारा पृथिवी लोक तथा पृथिवीस्थ पदार्थों से उठकर अन्तरिक्षस्थ पदार्थों को प्राप्त कर लेता है, तत्पश्चात् द्युलोक को प्राप्त करता है । इस प्रकार तीनों लोकों को सम्यक् जानकर सुखस्वरूप तथा परम ज्योति परमात्मा को प्राप्त करके आनन्द में रहता है ॥ १७ । ६७ ॥

विधृतिः । **अग्निः**=**योगी** । निचृदार्ष्यनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह** ॥

योगी के गुणों का फिर उपदेश किया है ॥

**स्वर्यन्तो नापेक्षन्त ऽ आ द्याᳫं रोहन्ति रोदसी । यज्ञं ये विश्वतोधारᳫंसुविद्वाᳫंसो वितेनिरे ॥६८॥**

**पदार्थः**—(**स्वः**) सुखम् (**यन्तः**) उपयन्तः (**न**) इव (**अप**) (**ईक्षन्ते**) समालोकन्ते (**आ**) समन्तात् (**द्याम्**) प्रकाशमयीं योगविद्याम् (**रोहन्ति**) (**रोदसी**) द्यावापृथिव्यौ (**यज्ञम्**) संगन्तव्यम् (**ये**) (**विश्वतोधारम्**) विश्वतः=सर्वतो धाराः=सुशिक्षिता वाचो यस्मिंस्तम् (**सुविद्वांसः**) शोभनाश्च ते योगिनः (**वितेनिरे**) विस्तृतं कुर्वन्ति ॥ ६८ ॥

**अन्वयः**—ये सुविद्वांसो यन्तो न स्वरपेक्षन्ते रोदसी आरोहन्ति द्यां विश्वतोधारं यज्ञं वितेनिरे तेऽक्षयं सुखं लभन्ते ॥ ६८ ॥

**सपदार्थान्वयः**—**ये सुविद्वांसः** शोभनाश्च ते योगिनः **यन्तः** उपयन्तः **न** इव **स्वः** सुखम् **अपेक्षन्ते** समालोकन्ते, **रोदसी** द्यावापृथिव्यौ **आ**-

**भाषार्थ**—(ये) जो (सुविद्वांसः) उत्तम योगी लोग (यन्तः) परमात्मा के पास जाते हुए (न) से (स्वः) सुख को (अपेक्षन्ते) देखते हैं,

[हे ईश्वरजिज्ञासवो मनुष्याः !······अत्र परमे व्योमन् व्याप्तं परमात्मानमहं ते यथा परिददामि···वः=युष्मभ्यमुपदिशानि···तं यूयं विजानीत]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः ॥ ये मनुष्या विद्वदनुकूलमाचरन्ति, ते सर्वव्यापिनमन्तर्यामिणमीश्वरं प्राप्तुमर्हन्ति ॥ १८ । ५९ ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ॥ जो मनुष्य विद्वानों के अनुकूल आचरण करते हैं वे सर्वव्यापक, अन्तर्यामी ईश्वर को प्राप्त कर सकते हैं ॥ १८ । ५९ ॥

**भाष्यसार**—१. **ईश्वर को कौन जान सकता है ?**—जो जातवेदा=वेदार्थ का पूर्ण रूप से ज्ञाता है, जो यज्ञपति=यज्ञ का पालक अथवा संगमनीय व्यवहारों का पालक है, और जो अन्वागन्ता=धर्म का अनुयायी है, वह आकाश के समान व्यापक, सुख के भण्डार ईश्वर को जान सकता है।

२. **अलङ्कार**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है। जो विद्वानों के अनुसार आचरण करते हैं, वे ईश्वर को प्राप्त कर सकते हैं ॥ १८ । ५९ ॥

विश्वकर्मा । **प्रजापतिः**=ईश्वरः । निचृदार्षी त्रिष्टुप् । धैवतः ॥

**पुनस्स एव विषय उपदिश्यते ॥**

विद्वान् सत्य का निर्णय कैसे करें, यह फिर उपदेश किया है ॥

**एतं जानाथ परमे व्योमन् देवाः सधस्था विद रूपमस्य ।**
**यदागच्छात्पथिभिर्देवयानैरिष्टापूर्त्ते कृणवाथाविरस्मै ॥ ६० ॥**

**पदार्थः**—(एतम्) परमात्मानम् (**जानाथ**) विजानीत । लेट् प्रयोगोऽयम् (**परमे**) (**व्योमन्**) (**देवाः**) विद्वांसः (**सधस्थाः**) सहस्थानाः (**विद**) बुद्ध्यध्वम् (**रूपम्**) सच्चिदानन्दस्वरूपम् (**अस्य**) (**यत्**) (**आगच्छात्**) समन्तात् प्राप्नुयात् (**पथिभिः**) मार्गैः (**देवयानैः**) देवा=धार्मिका विद्वांसो गच्छन्ति येषु तैः (**इष्टापूर्ते**) इष्टं=श्रौतं कर्म च पूर्त्तं=स्मार्त्तं कर्म च ते (**कृणवाथ**) कुरुथ (**आविः**) प्राकट्ये (**अस्मै**) परमात्मने ॥ ६० ॥

**प्रमाणार्थ**—(**जानाथ**) यह 'लेट्' लकार का प्रयोग है ॥

**अन्वयः**—हे सधस्था देवाः ! यूयं परमे व्योमन् व्याप्तमेतं जानाथास्य रूपं विद यद्देवयानैः पथिभिरागच्छादस्मै परमात्मने इष्टापूर्त्ते आविः कृणवाथ ॥ ६० ॥

**सपदार्थान्वयः**—हे **सधस्थाः** सहस्थानाः **देवाः** ! विद्वांसः ! **यूयं परमे व्योमन्** व्याप्तमेतं परमात्मानं **जानाथ** विजानीत, **अस्य रूपं** सच्चिदानन्दस्वरूपं **विद** बुद्ध्यध्वम् ।

**यद्देवयानैः** देवाः=धार्मिका विद्वांसो गच्छन्ति येषु तैः **पथिभिः** मार्गैः **आगच्छात्** समन्तात्प्राप्नुयात् **अस्मै**=**परमात्मने इष्टापूर्ते** इष्टं=श्रौतं कर्म च, पूर्तं=स्मार्तं कर्म च ते **आविः** प्रकटं **कृणवाथ** कुरुथ ॥ १८ । ६० ॥

**भाषार्थ**—हे (सधस्थाः) साथ बैठे हुए (देवाः) विद्वानो ! तुम—(परमे) विशाल (व्योमन्) आकाश में व्याप्त (एतम्) इस परमात्मा को (जानाथ) जानो । (अस्य) इसके (रूपम्) सच्चिदानन्दस्वरूप को (विद) समझो ।

(यत्) जो (देवयानैः) धार्मिक विद्वान् जिन पर चलते हैं उन (पथिभिः) मार्गों से (आगच्छात्) प्राप्त होता है (अस्मै) इस परमात्मा के लिए (इष्टापूर्ते) इष्ट=श्रौतकर्म और पूर्तं=स्मार्त्त कर्म को (आविः) प्रसिद्ध (कृणवाथ) करो ॥६०॥

[हे···देवाः ! यूयं परमे व्योमन् व्याप्तमेतं जानाथ, यद् देवयानैः पथिरागच्छात्]

**भावार्थः**—सर्वे मनुष्या विद्वत्सङ्ग-योगाभ्यासधर्माचारैः परमेश्वरमवश्यं जानीयुः ।

**भावार्थ**—सब मनुष्य विद्वानों के संग और योगाभ्यास से परमेश्वर को अवश्य जानें ।

[ इष्टापूर्ते आविः कृणवाथ ]

नो चेदिष्टापूर्त्ते साधयितुं न शक्नुयुः ।

नहीं तो—श्रौत और स्मार्त्त कर्मों को सिद्ध नहीं कर सकते ।

[अस्य रूपं विद]

न च मुक्तिं प्राप्नुयुः ॥ १८ । ६० ॥

और न ही मुक्ति को प्राप्त हो सकते हैं ॥६०॥

**भा० पदार्थः**—देवयानैः=विद्वत्सङ्गयोगाभ्यासधर्माचारैः ।

**भाष्यसार**—**ईश्वर को जानने के उपाय**—जो विद्वान् मनुष्य देवयानैः=धार्मिक विद्वानों के मार्ग पर अर्थात् योगाभ्यासादि करते हैं, उनके अनुसार अपना आचरण बना लेते हैं, और जो परमात्मा के सच्चिदानन्द स्वरूप को जानने के लिए इष्ट=श्रौतकर्म, पूर्त्त=स्मार्त्त कर्मों को करते हैं, वे सर्वव्यापक परमात्मा को जान सकते हैं ॥ १८ । ६० ॥

गालवः । **प्रजापतिः**=**विद्वान्** । आर्षी त्रिष्टुप् । धैवतः ॥

**पुनस्स एव विषयः प्रोच्यते ॥**

विद्वान् सत्य का निर्णय कैसे करें, यह फिर उपदेश किया है ॥

उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्त्ते सꣳसृजेथामयं च ।
अस्मिन्त्सधस्थे ऽ अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ ६१ ॥

**पदार्थः**—(उत्) ऊर्ध्वम् (**बुध्यस्व**) जानीहि (**अग्ने**) अग्निरिव वर्त्तमान पुरुष (**प्रति**) (**जागृहि**) यजमानं प्रबोधयाविद्यानिद्रां पृथक्कृत्य विद्यायां जागरूकं कुरु (**त्वम्**) (**इष्टापूर्त्ते**) इष्टं च पूर्त्तं च ते (**सम्**) संसर्गे (**सृजेथाम्**) निष्पादयेताम् (**अयम्**) ब्रह्मविद्योपदेष्टा (**च**) (**अस्मिन्**) (**सधस्थे**) सहस्थाने (**अधि**) उपरि (**उत्तरस्मिन्**) उत्तमासने (**विश्वे**) समग्राः (**देवाः**) विद्यायाः कामयितारः (**यजमानः**) विद्याप्रदाता यज्ञकर्त्ता (**च**) (**सीदत**) तिष्ठत ॥ ६१ ॥

**अन्वयः**—हे अग्ने ! त्वमुद्बुध्यस्व प्रति जागृहि त्वं चायं इष्टापूर्त्ते संसृजेथां हे विश्वेदेवा कृतेष्टापूर्त्तो यजमानश्च यूयं सधस्थेऽस्मिन्नुत्तरस्मिन्नधि सीदत ॥ ६१ ॥

**सपदार्थान्वयः**—**हे अग्ने !** अग्निरिव वर्त्तमान पुरुष ! **त्वमुद् बुध्यस्व** ऊर्ध्वं जानीहि, **प्रति जागृहि** यजमानं प्रबोधयाविद्यानिद्रां पृथक्कृत्य विद्यायां जागरूकं कुरु, **त्वं चायं** ब्रह्मविद्योपदेष्टा **इष्टापूर्त्ते** इष्टं च पूर्तं च ते **संसृजेयां** संसर्गेण निष्पादयेताम् ।

**भावार्थ**—हे (अग्ने) अग्नि के समान वर्ताव वाले पुरुष ! तू—(उद्बुध्यस्व) उद्बुद्ध हो, (प्रतिजागृहि) यजमान को प्रबुद्ध कर अर्थात् अविद्या-निद्रा को हटाकर विद्या में जागरूक कर, तू और (अयम्) यह ब्रह्म-विद्या का उपदेष्टा पुरुष (इष्टापूर्ते) इष्ट और पूर्त को (संसृजेथाम्) विद्वानों के संसर्ग से सिद्ध करो ।

हे विश्वेदेवाः ! समग्राः विद्यायाः कामयितारः ! **कृतेष्टापूर्त्तौ यजमानः** विद्याप्रदाता यज्ञकर्त्ता **च यूयं सधस्थे** सहस्थाने **अस्मिन्नुत्तरस्मिन्** उत्तमासने **अधि+सीदत** उपरि तिष्ठत ॥ १८ । ६१ ॥

हे (विश्वेदेवाः) समग्र विद्या की कामना करने वाले विद्वानो एवं इष्ट और पूर्त्त को सिद्ध करने वाला (यजमानः) विद्या का दाता यजमान तुम—(अस्मिन्) इस (सधस्थे) सभा-भवन में (उत्तरस्मिन्) उत्तम आसन पर (अधि+सीदत) बैठो ॥ १८ । ६१ ॥

[ हे अग्ने ! त्वमुद्बुध्यस्व ]

**भावार्थः**—ये सचेतना धीमन्तो विद्यार्थिनः स्युस्ते ऽध्यापकैः सम्यगध्यापनीयाः स्युः ।

**भावार्थ**—जो चेतना वाले बुद्धिमान् विद्यार्थी हों उन्हें अध्यापक लोग उत्तम रीति से पढ़ावें ।

[ प्रति जागृहि, त्वं चायमिष्टापूर्त्ते संसृजेथाम् ]

ये विद्याभीप्सवोऽध्यापकानुकूलाचरणाः स्युः, ये च तदधीना अध्यापकास्ते परस्परं प्रीत्या सततं विद्योन्नतिं कुर्युः ।

जो विद्या प्राप्ति कराने के इच्छुक अध्यापक के अनुकूल आचरण करने वाले मुख्याध्यापक हों और जो उनके अधीन अध्यापक हों वे परस्पर प्रीति से सदा विद्या को उन्नत करें ।

[ हे विश्वेदेवाः···यूयं···उत्तरस्मिन्नधिसीदत ]

येऽतोऽन्ये प्रशस्ता विद्वांसः स्युस्त एतेषां सततं परीक्षां कुर्युः, यत एते विद्यावर्द्धने सततं प्रयतेरन्,

जो इनसे भिन्न प्रशस्त विद्वान् हों वे इनकी सदा परीक्षा करें जिससे ये विद्या-वृद्धि में सदा प्रयत्न करें ।

[यजमानश्च०···]

तथा—ऋत्विग्यजमानादयो भवेयुः ॥१८।६१॥

ऋत्विक् और यजमान आदि भी वैसे ही हों ॥ १८ । ६१ ॥

**भा० पदार्थः**—अग्ने=अध्यापक ! ॥ विश्वेदेवाः=प्रशस्ता विद्वांसः ॥

**भाष्यसार**—**विद्वद्धर्म का उपदेश**—सभा-भवन में उत्तम आसन पर बैठ कर पूर्ण विद्वान् अविद्या अन्यायादि को समाप्त करने के लिए ब्रह्मविद्या के उपदेश से दूसरों को प्रबुद्ध करें । इसी प्रकार यजमान-अध्यापक भी श्रेष्ठ विद्या से विद्यार्थियों को प्रबुद्ध करें और इष्ट तथा पूर्त्त की सिद्धि के लिए सदा यत्न किया करें ॥ १८ । ६१ ॥

देवश्रवदेववातौ । **विश्वकर्माग्निर्वा**=विद्वान् । निचृदार्ष्यनुष्टुप् गान्धारः ॥

**पुनः स एव विषयः प्रकाश्यते ॥**

विद्वान् सत्य का निर्णय कैसे करें, यह फिर उपदेश किया है ॥

**येन॒ वह॑सि स॒हस्रं॒ येना॑ग्ने सर्ववेद॒सम् । तेने॒मं य॒ज्ञं नो॑ नय॒ स्व॑र्दे॒वेषु॒ गन्त॑वे ॥ ६२ ॥**

**पदार्थः**—(**येन**) अध्यापनेन (**वहसि**) प्राप्नोषि (**सहस्रम्**) असंख्यमतुलं बोधम् (**येन**) अध्ययनेन (**अग्ने**) अध्यापकाध्येतर्वा (**सर्ववेदसम्**) सर्वे वेदसो=वेदा विज्ञायन्ते यस्मिँस्तम् (**तेन**) (**इमम्**)

वक्ष्यमाणम् (**यज्ञम्**) अध्ययनाध्यापनाख्यम् (**नः**) अस्मान् (**नय**) प्राप्नुहि प्रापय वा (**स्वः**) सुखम् (**देवेषु**) दिव्येषु गुणेषु विद्वत्सु वा (**गन्तवे**) गन्तुं=प्राप्तुम् ॥ ६२ ॥

**अन्वयः**—हे अग्ने ! त्वं येन सहस्रं सर्ववेदसं वहसि प्राप्नोषि येन च प्रापयसि तेनेमं यज्ञं नो देवेषु स्वर्गन्तवे नय ॥ ६२ ॥

**सपदार्थान्वयः**—**हे अग्ने !** अध्यापकाध्येतर्वा **त्वं येन** अध्ययनेन **सहस्रम्** असंख्यमतुलं बोधं **सर्ववेदसं** सर्वे वेदसो=वेदा विज्ञायन्ते यस्मिँस्तं **वहसि**=प्राप्नोषि, **येन** अध्यापनेन **च प्रापयसि, तेनेमं** वक्ष्यमाणं **यज्ञम्** अध्ययनाध्यापनाख्यं **नः** अस्मान् **देवेषु** दिव्येषु गुणेषु विद्वत्सु वा **स्वः** सुखं **गन्तवे** गन्तुं=प्राप्तुं **नय** प्राप्नुहि प्रापय वा ॥ १८ । ६२ ॥

**भाषार्थ**—हे (अग्ने) अध्यापक वा अध्येता=पढ़ने वाले ! तू—(येन) जिस अध्ययन से (सहस्रम्) असंख्य=अतुल बोध को तथा (सर्ववेदसम्) सब वेदों को जनाने वाले विज्ञान को (वहसि) प्राप्त करता है, और (येन) जिस अध्यापन से प्राप्त कराता है (तेन) उससे (इमम्) इस (यज्ञम्) अध्ययन-अध्यापन नामक यज्ञ को (नः) हमें (देवेषु) दिव्यगुणों वा विद्वानों में (स्वः) सुख को (गन्तवे) प्राप्त करने के लिए (नय) प्राप्त कर वा प्राप्त करा ॥ १८ । ६२ ॥

[ हे अग्ने ! त्वं येन ... सर्ववेदसं वहसि ... तेनेमं यज्ञं ... स्वर्गन्तवे नय ]

**भावार्थः**—ये धर्माचरणनिष्कपटत्वाभ्यां विद्यां प्रयच्छन्ति गृह्णन्ति च त एव सुखभागिनो भवन्ति ॥ १८ । ६२ ॥

**भावार्थ**—जो लोग धर्माचरण और निष्कपटता से विद्या देते और लेते हैं वे ही सुखभागी होते हैं ॥ १८ । ६२ ॥

**भाष्यसार**—**विद्वद्धर्म का उपदेश**—अग्ने=अग्नि के समान विद्या से प्रकाशमान विद्वान् अध्यापकों का यह कर्त्तव्य है कि वे अध्ययन-अध्यापन रूप यज्ञ को सदा निष्कपटता से प्रचलित रक्खें। क्योंकि इससे सुख के साधन दिव्य गुणों की प्राप्ति और सब प्रकार का ज्ञान तथा विज्ञान प्राप्त होता है ॥ १८ । ६२ ॥

विश्वामित्रः । **यज्ञः=अग्निहोत्रादिः** । निचृदनुष्टुप् । गान्धारः ॥

**पुनर्मनुष्यैः क्रियायज्ञः कथं साधनीय इत्युपदिश्यते ॥**

फिर मनुष्यों को क्रियायज्ञ कैसे सिद्ध करना चाहिए, यह उपदेश किया जाता है ॥

**प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ६३ ॥**

**पदार्थः**—(**प्रस्तरेण**) आसनेन (**परिधिना**) यः परितः=सर्वतो धीयते तेन (**स्रुचा**) येन यज्ञः साध्यते (**वेद्या**) यस्यां हूयते तथा (**च**) (**बर्हिषा**) उत्तमेन कर्मणा (**ऋचा**) स्तुत्या ऋग्वेदादिना वा (**इमम्**) पदार्थमयम् (**यज्ञम्**) अग्निहोत्रादिकम् (**नः**) अस्मान् (**नय**) (**स्वः**) सांसारिकं सुखम् (**देवेषु**) दिव्येषु पदार्थेषु विद्वत्सु वा (**गन्तवे**) गन्तुं=प्राप्तुम् ॥ ६३ ॥

**अन्वयः**—हे विद्वंस्त्वं वेद्या स्रुचा बर्हिषा प्रस्तरेण परिधिनर्चा चेमं यज्ञं देवेषु गन्तवे स्वर्नो नय ॥ ६३ ॥

**सपदार्थान्वयः**—हे विद्वन् ! त्वं **वेद्या** यस्यां हूयते तया **स्रुचा** येन यज्ञः साध्यते **बर्हिषा** उत्तमेन कर्मणा **प्रस्तरेण** आसनेन **परिधिना** यः परितः=सर्वतो धीयते तेन **ऋचा** स्तुत्या ऋग्वेदादिना वा **चेमं** पदार्थमयं **यज्ञम्** अग्निहोत्रादिकं **देवेषु** दिव्येषु पदार्थेषु विद्वत्सु वा **गन्तवे** गन्तुं=प्राप्तुं **स्वः** सांसारिकं सुखं **नः** अस्मान् **नय** ॥ १८ । ६३ ॥

**भाषार्थ**—हे विद्वान् ! तू—(वेद्या) जिसमें होम किया जाता है उस वेदी से, (स्रुचा) जिससे यज्ञ सिद्ध किया जाता है उस स्रुवा से, (बर्हिषा) उत्तम कर्म से, (प्रस्तरेण) आसन से, (परिधिना) सब ओर से धारण करने योग्य परिधि से, और (ऋचा) स्तुति वा ऋग्वेदादि से (इमम्) इस पदार्थमय (यज्ञम्) अग्निहोत्र आदि को (देवेषु) दिव्य पदार्थों वा विद्वानों में (गन्तवे) पहुँचाने के लिए (स्वः) सांसारिक सुख (नः) हमें (नय) प्राप्त करा ॥ १८ । ६३ ॥

[हे विद्वंस्त्वं वेद्या स्रुचा बर्हिषा प्रस्तरेण···ऋचा चेमं यज्ञं०—]

**भावार्थः**—ये मनुष्या धर्मेण प्राप्तैर्द्रव्यैर्वेदरीत्या च साङ्गोपाङ्गं यज्ञं साध्नुवन्ति, ते सर्वप्राण्युपकारिणो भवन्ति ॥ १८ । ६३ ॥

**भावार्थ**—जो मनुष्य धर्म से प्राप्त द्रव्यों के द्वारा और वेद-रीति से साङ्गोपाङ्ग यज्ञ को सिद्ध करते हैं वे सब प्राणियों के उपकारी होते हैं ॥ १८ । ६३ ॥

**भा० पदार्थः**—वेद्या, स्रुचा, बर्हिषा, प्रस्तरेण=धर्मेण प्राप्तैर्द्रव्यैः ॥ ऋचा=वेदरीत्या । यज्ञम्=साङ्गोपाङ्गं यज्ञम् ।

**भाष्यसार**—**अग्निहोत्र के साधन और उससे लाभ**—भौतिक यज्ञ से दिव्यगुणों की प्राप्ति तथा सांसारिक सुखों की प्राप्ति होती है। अतः इस यज्ञ के साधनों को अर्थात् वेदी, स्रुवा, आसनादि को धर्म-पूर्वक प्राप्त करें और ऋग्वेदादि के स्तुति करने योग्य मन्त्रों का ज्ञान करके अग्निहोत्र की सिद्धि अवश्य करें । इससे सब प्राणियों का उपकार होता है ॥ १८ । ६३ ॥

विश्वकर्मा । **यज्ञः**=क्रियायज्ञः । निचृदनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

क्रियायज्ञ का फिर उपदेश किया है ॥

**यद्दत्तं यत्प॑रा॒दान॒ं यत्पू॒र्त्तं याश्च॒ दक्षि॑णाः । तद॒ग्निर्वै॑श्वकर्म॒णः स्व॑र्दे॒वेषु॑ नो दधत् ॥ ६४ ॥**

**पदार्थः**—(**यत्**) (**दत्तम्**) सुपात्रेभ्यः समर्पितम् (**यत्**) (**परादानम्**) परेभ्य आदानम् (**यत्**) (**पूर्त्तम्**) पूर्णां सामग्रीम् (**याः**) (**च**) (**दक्षिणाः**) कर्मानुसारेण दानानि (**तत्**) (**अग्निः**) पावक इव गृहस्थो विद्वान् (**वैश्वकर्मणः**) विश्वानि=समग्राणि कर्माणि यस्य स एव (**स्वः**) ऐन्द्रियं सुखम् (**देवेषु**) दिव्येषु धर्म्येषु व्यवहारेषु (**नः**) अस्मान् (**दधत्**) दधातु ॥ १८ । ६४ ॥

**अन्वयः**—हे गृहस्थ ! त्वया यद्दत्तं यत्परादानं यत्पूर्त्तं याश्च दक्षिणा दीयन्ते तत्स्वश्च वैश्वकर्मणोऽग्निरिव भवान् देवेषु नो दधत् ॥ १८ । ६४ ॥

**सपदार्थान्वयः**—हे गृहस्थ ! त्वया **यद्दत्तं** सुपात्रेभ्यः समर्पितं **यत् परादानं** परेभ्य

**भाषार्थ**—हे गृहस्थ पुरुष ! तुझसे—(यत्) जो (दत्तम्) सुपात्रों को पदार्थों का समर्पण, (यत्)

आदानं **यत्पूर्त्तं** पूर्णा सामग्री **याश्च दक्षिणाः** कर्मानुसारेण दानानि **दीयन्ते, तत्स्वः** ऐन्द्रियं सुखं **च वैश्वकर्मणः** विश्वानि=समग्राणि कर्माणि यस्य, स एव **अग्निः** पावक इव गृहस्थो विद्वान् **इव भवान् देवेषु** दिव्येषु धर्म्येषु व्यवहारेषु **नः** अस्मान् **दधत्** दधातु ॥ १८ । ६४ ॥

जो (परादानम्) दूसरों से पदार्थों का ग्रहण, (यत्) जो (पूर्त्तम्) पूर्ण सामग्री (याश्च) और जो (दक्षिणाः) कर्मानुसार नाना दान दिए जाते हैं, (तत्) उसे और (स्वः) इन्द्रिय-सम्बन्धी सुख को (वैश्वकर्मणः) विश्व=सब कर्मों वाले (अग्निः) अग्नि के तुल्य गृहस्थ विद्वान् के समान आप (देवेषु) दिव्य धर्मयुक्त व्यवहारों में (नः) हमें (दधत्) स्थापित कर ॥ १८ । ६४ ॥

**[हे गृहस्थ ! त्वया...यत्पूर्त्तं याश्च दक्षिणा दीयन्ते तत्...अग्निरिव भवान् देवेषु नो दधत्]**

**भावार्थः**—ये याश्च गृहाश्रमं चिकीर्षेयुस्ते पुरुषास्ताः स्त्रियश्च विवाहात् प्राक् प्रागल्भ्यादि-सामग्रीं कृत्वैव युवावस्थायां स्वयंवरं विवाहं कृत्वा—

**भावार्थ**—जो गृहाश्रम करने की इच्छा करें वे पुरुष और स्त्रियाँ विवाह से पहले प्रागल्भ्य=प्रौढ़ता आदि सामग्री को सिद्ध करके युवावस्था में स्वयंवर विवाह कर—

**[यद्दत्तं यत् परादानं...याश्च दक्षिणाः]**

दानादानमानादिव्यवहारं कुर्युः ॥ १८ । ६४ ॥

दान, आदान=लेना और मान आदि व्यवहार करें ॥ १८ । ६४ ॥

**भा० पदार्थः**—पूर्त्तम्=प्रागल्भ्यसामग्रीम् । दत्तम्=दानम् । परादानम्=आदानम् । दक्षिणाः=मानादिव्यवहाराः ॥

**भाष्यसार**—**अग्निहोत्र से लाभ**—अग्नि=गृहस्थ विद्वानों का कर्तव्य है कि वे स्व=इन्द्रिय-सम्बन्धी सुखों के लिए और दिव्य धर्मयुक्त व्यवहारों की सिद्धि के लिए यज्ञ की पूर्ण सामग्री से अग्निहोत्र करें और दक्षिणादि से विद्वानों का उचित सत्कार सदा किया करें ॥ १८ । ६४ ॥

विश्वकर्मा । **यज्ञः=क्रियायज्ञः** । विराडनुष्टुप् । गान्धारः ॥

**पुनर्मनुष्याः किं कुर्युरित्याह ॥**

फिर मनुष्यों को क्या करना चाहिए, यह उपदेश किया है ॥

**यत्र धारा ऽ अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥ ६५ ॥**

**पदार्थः**—(**यत्र**) यज्ञे (**धाराः**) प्रवाहाः (**अनपेताः**) नापेताः=पृथग्भूताः (**मधोः**) मधुर-गुणान्वितस्य द्रव्यस्य (**घृतस्य**) आज्यस्य (**च**) (**याः**) (**तत्**) ताभिः (**अग्निः**) पावकः (**वैश्वकर्मणः**) विश्वान्यखिलानि कर्माणि यस्मात् स एव (**स्वः**) सुखम् (**देवेषु**) दिव्येषु व्यवहारेषु (**नः**) अस्मभ्यम् (**दधत्**) दधाति । **दधातेर्लेटो रूपम्** ॥ ६५ ॥

**प्रमाणार्थ**—(**दधत्**) यह 'धा' धातु का लेट् का रूप है ॥

**अन्वयः**—यत्र मधोर्घृतस्य च या अनपेता धारा विद्वद्भिः क्रियन्ते तद्वैश्वकर्मणोऽग्निर्नो देवेषु स्वर्दधत् ॥ ६५ ॥

**सपदार्थान्वयः**—यत्र यज्ञे **मधोः** मधुरगुणान्वितस्य द्रव्यस्य **घृतस्य** आज्यस्य **च या अनपेताः** नापेताः=पृथग्भूताः **धाराः** प्रवाहाः **विद्वद्भिः क्रियन्ते, तत्** ताभिः **वैश्वकर्मणः** विश्वान्यखिलानि कर्माणि यस्मात् स एव **अग्निः** पावकः **नः** अस्मभ्यं **देवेषु** दिव्येषु व्यवहारेषु **स्वः** सुखं **दधत्** दधाति ॥ १८ । ६५ ॥

**भाषार्थ**—(यत्र) जिस यज्ञ में (मधोः) मधुर गुण से युक्त द्रव्य की और (घृतस्य) घृत की जो (अनपेताः) पृथक्-पृथक् (धाराः) धाराएँ विद्वान् लोग बनाते हैं, (तत्) उनसे (वैश्वकर्मणः) सब कर्मों का निमित्त (अग्निः) अग्नि (नः) हमारे लिए (देवेषु) दिव्य व्यवहारों में (स्वः) सुख को (दधत्) धारण करता है ॥ १८ । ६५ ॥

[ यत्र मधोर्घृतस्य च···धारा विद्वद्भिः क्रियन्ते ]

**भावार्थः**—ये मनुष्या वेद्यादिकं निर्माय सुगन्धिमिष्टादियुक्तं बहुघृतमग्नौ जुह्वति ते—

**भावार्थ**—जो मनुष्य वेदी आदि को बनाकर सुगन्धि और मिष्ट=मीठा आदि से युक्त बहुत घृत का अग्नि में होम करते हैं, वे—

[**वैश्वकर्मणोऽग्निर्नो देवेषु स्वर्दधत्**]

सर्वान् रोगान् निहत्यातुलं सुखं जनयन्ति ॥

सब रोगों को दूर कर अतुल सुख उत्पन्न करते हैं ॥ १८ । ६५ ॥

**भा० पदार्थः**—मधोः=सुगन्धिमिष्टादियुक्तस्य । वैश्वकर्मणः=सर्वरोगनिहन्ता । स्वः=अतुलं सुखम् ॥

**भाष्यसार**—**अग्निहोत्र से लाभ**—भौतिक-यज्ञ में मधुर-गुणयुक्त और घृतादि पौष्टिक पदार्थों के डालने से सब प्रकार के कर्मों की सिद्धि, दिव्य व्यवहारों की सिद्धि और रोगनिवृत्ति होने से सांसारिक-सुखों की प्राप्ति होती है ॥ १८ । ६५ ॥

देवश्रवो देववातौ । **अग्निः**=भौतिकोऽग्निः । निचृत् त्रिष्टुप् । धैवतः ॥

**यज्ञेन किं जायत इत्याह ॥**

यज्ञ से क्या होता है, इस विषय का उपदेश किया है ॥

**अ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दा घृ॒तं मे॒ चक्षु॑र॒मृतं॑ म ऽ आ॒सन् ।**
**अ॒र्कस्त्रि॒धातू॒ रज॑सो वि॒मानोऽज॑स्रो घ॒र्मो ह॒विर॑स्मि॒ नाम॑ ॥ ६६ ॥**

**पदार्थः**—(**अग्निः**) पावक इव (**अस्मि**) (**जन्मना**) प्रादुर्भावेन (**जातवेदाः**) यो जातेषु विद्यते सः (**घृतम्**) आज्यम् (**मे**) मह्यम् (**चक्षुः**) दर्शकं=प्रकाशकम् (**अमृतम्**) अमृतात्मकं भोज्यं वस्तु (**मे**) मम (**आसन्**) आस्ये (**अर्कः**) सर्वान् प्राणिनोऽर्चन्ति येन सः (**त्रिधातुः**) त्रयो धातवो यस्मिन् सः (**रजसः**) लोकसमूहस्य (**विमानः**) विमानयानमिव धर्त्ता (**अजस्रः**) अजस्रं गमनं विद्यते यस्य सः । अत्रार्शआदिभ्योऽजित्यच् (**घर्मः**) जिघ्रति येन सः प्रकाश इव यज्ञः (**हविः**) होतव्यं द्रव्यम् (**अस्मि**) (**नाम**) ख्यातिः ॥ १८ । ६६ ॥

**प्रमाणार्थ**—(अजस्रः) यहाँ 'अर्शआदिभ्योऽच्' (५ । २ । १२७) से 'अच्' प्रत्यय है ॥

**अन्वयः**—अहं जन्मना जातवेदा अग्निरिवास्मि यथाऽग्नेर्घृतं चक्षुरस्ति तथा मेऽस्तु यथा पावकं संस्कृतं हविर्हुतं सदमृतं जायते तथा म आसन् मुखेऽस्तु यथा त्रिधातू रजसो विमानोऽजस्रो घर्मोऽर्को यस्य नाम संशोधितं हविश्चास्ति तथाऽहमस्मि ॥ १८ । ६६ ॥

**सपदार्थान्वयः**--**अहं** जन्मना प्रादुर्भावेन **जातवेदाः** यो जातेषु विद्यते सः **अग्निः** पावकः **इवास्मि** ।

**यथाऽग्नेर्घृतम्** आज्यं **चक्षुः** दर्शकं=प्रकाशकम् **अस्ति, तथा मे** मह्यम् **अस्तु** ।

**यथा पावके संस्कृतं हविः** होतव्यं द्रव्यं **हुतं सदमृतम्** अमृतात्मकं भोज्यं वस्तु **जायते, तथा मे** मम **आसन्**=**मुखे** आस्ये **अस्तु** ।

**यथा त्रिधातुः** त्रयो धातवो यस्मिन् सः **रजसः** लोकसमूहस्य **विमानः** विमानयानमिव धर्त्ता **अजस्रः** अजस्रं गमनं विद्यते यस्य सः **घर्मः** जिघ्रति येन सः प्रकाश इव यज्ञः **अर्कः** सर्वान् प्राणिनोऽर्चन्ति येन सः **यस्य नाम** ख्यातिः **संशोधितं हविः** होतव्यं द्रव्यं **चास्ति, तथाऽहमस्मि** ॥ १८ । ६६ ॥

**भाषार्थ**–मैं (जन्मना) जन्म से (जातवेदाः) उत्पन्न पदार्थों में विद्यमान (अग्निः) अग्नि के समान (अस्मि) हूँ ।

जैसे—अग्नि का (घृतम्) घृत (चक्षुः) प्रकाशक है वैसे (मे) मेरे लिए हो ।

जैसे—अग्नि में, शुद्ध (हविः) होम के योग्य द्रव्य, होम किया हुआ (अमृतम्) अमृत रूप भोज्य वस्तु बन जाता है, वैसे (मे) मेरे (आसन्) आस्य=मुख में (अस्तु) हो ।

जैसे—(त्रिधातुः) तीन धातुओं से युक्त, (रजसः) लोक-समूह को (विमानः) विमान-यान के समान धारण करने वाला, (अजस्रः) निरन्तर गति से युक्त, (घर्मः) प्रकाश के समान, (अर्कः) सब प्राणियों का अर्चा=पूजा का साधन यज्ञ है, और जिसका (नाम) नाम संशोधित (हविः) हवि=होम के योग्य द्रव्य है, वैसा मैं हूँ ॥ १८ । ६६ ॥

[ अहम्...अग्निरिवास्मि ]

**भावार्थः**– अत्र वाचकलुप्तोपमालङ्कारः ।

यथाऽग्निर्हुतं हविर्वायौ प्रसार्य दुर्गन्धं निवार्य, सुगन्धं प्रकटय्य, रोगान् समूलघातं निहत्य, सर्वान् प्राणिनः सुखयति, तथैव मनुष्यैर्भवितव्यम् ॥ ६६ ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ॥

जैसे—अग्नि होम किए हुए हवि को वायु में फैलाकर, दुर्गन्ध का निवारण कर, सुगन्ध को प्रकट कर, रोगों को समूल नष्ट करके सब प्राणियों को सुखी करता है, वैसे ही मनुष्यों को भी करना चाहिए ॥ १८ । ६६ ॥

**भाष्यसार**—**१. भौतिकाग्नि में यज्ञ से लाभ**—भौतिकाग्नि को प्रत्येक पदार्थ में विद्यमान होने से जातवेदा कहते हैं। अग्नि घृतादि पदार्थों से प्रदीप्त हो जाती है। अग्नि में जो घृतादि पौष्टिक पदार्थ, और शुद्ध किये हुए रोगनाशक द्रव्य डाले जाते हैं, वे वायु की शुद्धि करके रोगनाशक हो जाते हैं, अतः अमृत हो जाते हैं। अतः दीर्घ जीवन के इच्छुक मनुष्यों को यज्ञ अवश्य करने चाहिए ॥

**२. अलङ्कार**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है। जैसे हवि डालने से अग्नि सब प्राणियों को अमृत प्रदान करती है, वैसे ही सब मनुष्य सब का उपकार सदा किया करें ॥ १८ । ६६ ॥

देवश्रवो देववातौ । **अग्निः**=**अग्निहोत्रादियज्ञः** । आर्षी जगती । निषादः ॥

**अथर्गादिवेदाध्ययनेन किं कार्यमित्युपदिश्यते** ॥

अब ऋग्वेद आदि को पढ़ के क्या करना चाहिए, इस विषय का उपदेश किया जाता है ॥

ऋचो नामांस्मि यजूंꣳषि नामांस्मि सामांनि नामांस्मि ।
ये ऽ अग्नयः पाञ्चंजन्या ऽ अस्यां पृथिव्यामधि
तेषांमसि त्वमुत्तमः प्र नों जीवातंवे सुव ॥ ६७ ॥

**पदार्थः**—(**ऋचः**) ऋग्वेदश्रुतयः (**नाम**) प्रसिद्धो (**अस्मि**) भवामि (**यजूंषि**) यजुर्मन्त्राः (**नाम**) (**अस्मि**) (**सामानि**) सामवेदमन्त्रगानानि (**नाम**) (**अस्मि**) (**ये**) (**अग्नयः**) आहवनीयादयः पावकाः (**पाञ्चजन्याः**) पञ्चजनेभ्यो हिताः । पञ्चजना इति मनुष्यना० ॥ निघं० २ । ३ ॥ (**अस्याम्**) (**पृथिव्याम्**) (**अधि**) उपरि (**तेषाम्**) (**असि**) (**त्वम्**) (**उत्तमः**) (**प्र**) (**नः**) अस्माकम् (**जीवातवे**) जीवनाय (**सुव**) प्रेरय ॥ ६७ ॥

**प्रमाणार्थ**—(पाञ्चजन्याः) 'पंचजनाः' यह पद निघं० (२ । ३) में मनुष्य-नामों में पठित है ॥

**अन्वयः**—हे विद्वन् ! योऽहमृचो नामास्मि यजूंषि नामास्मि सामानि नामास्मि तस्मान्मत्तो वेदविद्यां गृहाण । येऽस्यां पृथिव्यां पाञ्चजन्या अग्नयोऽधिषन्ति तेषां मध्ये त्वमुत्तमोऽसि स त्वं नो जीवातवे शुभकर्मसु प्रसुव ॥ ६७ ॥

**सपदार्थान्वयः**—हे विद्वन् ! योऽहमृचः ऋग्वेदश्रुतयः **नाम** प्रसिद्धः **अस्मि** भवामि, **यजूंषि** यजुर्मन्त्राः **नाम** प्रसिद्धः **अस्मि** भवामि, **सामानि** सामवेदमन्त्रगानानि **नाम** प्रसिद्धः **अस्मि** भवामि, **तस्मान्मत्तो वेदविद्यां गृहाण** ।

**येऽस्यां पृथिव्यां पाञ्चजन्याः** पञ्चजनेभ्यो हिताः **अग्नयः** आहवनीयादयः पावकाः **अधिषन्ति** (उपरि सन्ति) तेषां **मध्ये त्वमुत्तमोऽसि, स त्वं नः** अस्माकं **जीवातवे** जीवनाय **शुभकर्मसु प्रसुव** प्रेरय ॥ १८ । ६७ ॥

**भाषार्थ**—हे विद्वान् ! जो मैं—(ऋचः) ऋग्वेद (नाम) नाम से प्रसिद्ध (अस्मि) हूँ, (यजूंषि) यजुर्वेद (नाम) नाम से प्रसिद्ध (अस्मि) हूँ, (सामानि) सामवेद (नाम) नाम से प्रसिद्ध (अस्मि) हूँ इसलिए मुझसे वेद-विद्या को ग्रहण कर ।

(ये) जो (अस्याम्) इस (पृथिव्याम्) पृथिवी पर (पांचजन्याः) पाँच जन=सब मनुष्यों के लिए हितकारी (अग्नयः) आहवनीय आदि अग्नियाँ (अधि+षन्ति) हैं उनमें तू उत्तम है, सो तू—(नः) हमारे (जीवातवे) उत्तम जीवन के लिए शुभ कर्मों में (प्रसुव) प्रेरित कर ॥ १८ । ६७ ॥

[हे विद्वन् ! योऽहमृचो नामास्मि, यजूंषि नामास्मि, सामानि नामास्मि]

**भावार्थः**—यो मनुष्य ऋग्वेदमधीते स ऋग्वेदी, यो यजुर्वेदमधीते स यजुर्वेदी, यः सामवेदमधीते स सामवेदी, योऽथर्ववेदमधीते सोऽथर्ववेदी, यो द्वौ वेदावधीते स द्विवेदी, यस्त्रीन् वेदानधीते स त्रिवेदी, यश्चतुरो वेदानधीते स चतुर्वेदी, यश्च कमपि वेदं नाधीते स कामपि संज्ञां न लभते ।

**भावार्थ**—जो मनुष्य ऋग्वेद को पढ़ता है वह ऋग्वेदी, जो यजुर्वेद को पढ़ता है वह यजुर्वेदी, जो सामवेद को पढ़ता है वह सामवेदी, जो अथर्ववेद को पढ़ता है वह अथर्ववेदी नाम से प्रसिद्ध होता है । जो दो वेदों को पढ़ता है वह द्विवेदी, जो तीन वेदों को पढ़ता है वह त्रिवेदी, जो चारों वेदों को पढ़ता है वह चतुर्वेदी कहलाता है । जो किसी भी वेद को नहीं पढ़ता वह कोई भी संज्ञा=नाम को प्राप्त नहीं करता ।

[ये ''' पाञ्चजन्या अग्नयः ''' तेषाम् ''' उत्तमोऽसि]

ये वेदविदस्तेऽग्निहोत्रादियज्ञैः सर्वहितं सम्पादयेयुर्यत उत्तमा कीर्तिः स्यात् ।

जो वेदज्ञ हैं वे अग्निहोत्र आदि यज्ञों से सबका हित करें जिससे उत्तम कीर्ति हो ।

[स त्वं नो जीवातवे शुभकर्मसु प्रसुव]

सर्वे प्राणिनो दीर्घायुषश्च भवेयुः ॥

और—सब प्राणी दीर्घ आयु वाले हों ॥

**भा० पदार्थः**—पाञ्चजन्याः=सर्वेभ्यो हिताः । अग्नयः=अग्निहोत्रादियज्ञाः । जीवातवे=दीर्घायुषे ॥

**भाष्यसार**—**अग्निहोत्र से दीर्घ जीवन की प्राप्ति**—सब मनुष्यों का हितकारी होने से अग्नि का नाम पाञ्चजन्य है । जो इस अग्नि में चारों वेदों का ज्ञान प्राप्त करके शुद्ध हवि से यज्ञ करते हैं, वे दीर्घजीवन और उत्तम-जीवन को प्राप्त करते हैं और पृथिवी पर सर्वोपरि होकर उत्तम कीर्त्ति को प्राप्त करते हैं ॥ १८ । ६७ ॥ ●

इन्द्रः । **अग्निः**=**विद्वान् सूर्यः** । निचृद्गायत्री । षड्जः ॥

**सेनाध्यक्षः कथं विजयी भवेदित्याह ॥**

सेनाध्यक्ष कैसे विजयी हो, इस विषय का उपदेश किया है ॥

**वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वावर्तयामसि ॥ ६८ ॥**

**पदार्थः**—(**वार्त्रहत्याय**) विरुद्धभावेन वर्त्ततेऽसौ वृत्रः, वृत्र एव वार्त्रः । वार्त्रस्य=वर्त्तमानस्य शत्रोर्हत्या=हननं तत्र साधुस्तस्मै (**शवसे**) बलाय (**पृतनाषाह्याय**) ये मनुष्या पृतनाः सहन्ते ते पृतनासाहस्तेषु साधवे । (**च**) (**इन्द्र**) परमैश्वर्य्ययुक्त सेनेश (**त्वा**) त्वाम् (**आ**) समन्तात् (**वर्त्तयामसि**) प्रवर्त्तयामः ॥ १८ । ६८ ॥

**अन्वयः**—हे इन्द्र ! यथा वयं वार्त्रहत्याय शवसे पृतनाषाह्याय तेनान्येन योग्यसाधनेन च त्वाऽऽवर्त्तयामसि तथा त्वं वर्तस्व ॥ १८ । ६८ ॥

**सपदार्थान्वयः**—हे इन्द्र ! परमैश्वर्य्ययुक्त सेनेश ! **यथा वयं वार्त्रहत्याय** विरुद्धभावेन वर्त्ततेऽसौ वृत्रः, वृत्र एव वार्त्रः, वार्त्रस्य=वर्त्तमानस्य शत्रोर्हत्या=हननं, तत्र साधुस्तस्मै **शवसे** बलाय **पृतनाषाह्याय** ये मनुष्या पृतनाः सहन्ते ते पृतनासाहस्तेषु साधवे **तेनान्येन योग्यसाधनेन च त्वा** त्वाम् **आवर्त्तयामसि** समन्तात् प्रवर्त्तयामः **तथा त्वं वर्तस्व** ॥ १८ । ६८ ॥

**भाषार्थ**—हे (इन्द्र) परम ऐश्वर्य से युक्त सेनापति ! जैसे हम—(वार्त्रहत्याय) विरुद्ध भाव से वर्ताव करने वाला वृत्र कहलाता है, उस वृत्र की हत्या करने में कुशल पुरुष के लिए, (शवसे) बल प्राप्ति के लिए, (पृतनाषाह्याय) पृतना=शत्रु सेना को सहन=मर्षण करने वालों में कुशल पुरुष के लिए उस पूर्वोक्त अग्नि और अन्य योग्य साधन से (त्वा) तुझे (आवर्त्तयामसि) सब ओर से प्रवृत्त करते हैं; वैसे तू प्रवृत्त हो ॥ १८ । ६८ ॥

[हे इन्द्र ! वयं वार्त्रहत्याय ''' पृतनाषाह्याय ''' त्वा आवर्तयामसि]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः ।

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा

यो विद्वान्, सूर्यो मेघमिव शत्रून् हन्तुं शूरवीरसेनां सत्करोति, स सततं विजयी भवति ॥ १८ । ६८ ॥

अलङ्कार है ॥ जो विद्वान् पुरुष—मेघ-हन्ता सूर्य के समान शत्रुओं के हनन के लिए शूरवीर—सेना का सत्कार करता है, वह सदा विजयी होता है ॥ ६८ ॥

**भाष्यसार**—१. **विद्वान् सेनापति के विजय का उपाय-वर्णन**—जैसे सूर्य वृत्र अर्थात् शत्रुभाव से वर्त्ताव करने वाले मेघ को छिन्न-भिन्न करने के लिए बलवती किरणरूपी सेना से शत्रु-सेना का संहार करता है, वैसे ही ऐश्वर्यसम्पन्न सेनापति शत्रुसेना का प्रतिरोध करने में समर्थ सेना का संघटन करके शत्रुओं पर विजय प्राप्त किया करें ॥

२. **अलङ्कार**—सेनापति सूर्य की भाँति तेजस्वी होकर शत्रु-सेना का विघात करके सदा विजय को प्राप्त किया करे ॥ १८ । ६८ ॥

इन्द्रविश्वामित्रौ । **इन्द्रः**=सेनेशः । सभेशः । आर्षी त्रिष्टुप् । धैवतः ॥
**पुनर्जनैः कथम्भवितव्यमित्युपदिश्यते ॥**

फिर मनुष्यों को कैसा होना चाहिए, इस विषय का उपदेश किया है ॥

**सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र संपिणक् कुणारुम् ।**
**अभि वृत्रं वर्द्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥ ६९ ॥**

**पदार्थः**—(**सहदानुम्**) यः सहैव ददाति तम् (**पुरुहूत**) बहुभिस्सज्जनैः सत्कृत (**क्षियन्तम्**) गच्छन्तम् (**अहस्तम्**) अविद्यमानौ हस्तौ यस्य तम् (**इन्द्र**) शत्रुविदारक सेनेश (**सम्**) (**पिणक्**) पिनष्टि (**कुणारुम्**) शब्दयन्तम् । **अत्र "क्वण शब्दे" इत्यस्माद्धातोरौणादिक आरुः प्रत्ययः ।** (**अभि**) (**वृत्रम्**) मेघमिव (**वर्द्धमानम्**) (**पियारुम्**) पानकारकम् (**अपादम्**) पादेन्द्रियरहितम् (**इन्द्र**) सभेश (**तवसा**) बलेन । **तव इति बलना० ॥ निघं० २ । ९ ॥** (**जघन्थ**) जहि ॥ १८ । ६९ ॥

**प्रमाणार्थ**—(**कुणारुम्**) यहाँ 'क्वण शब्दे' इस धातु से औणादिक 'आरु' प्रत्यय है । (**तवसा**) बलेन । 'तव' यह पद निघं० (२ । ९) में बल-नामों में पठित है ॥

**अन्वयः**—हे पुरुहूतेन्द्र ! यथा सूर्यः सहदानुं क्षियन्तं कुणारुमहस्तं पियारुमपादमभिवर्द्धमानं वृत्रं सम्पिणक् तथा हे इन्द्र ! शत्रूँस्तवसा जघन्थ ॥ १८ । ६९ ॥

**सपदार्थान्वयः**—हे **पुरुहूत** बहुभिस्सज्जनैः सत्कृत **इन्द्र** शत्रुविदारक सेनेश ! **यथा सूर्यः सहदानुं** यः सहैव ददाति तं **क्षियन्तं** गच्छन्तं **कुणारुं** शब्दयन्तम् **अहस्तम्** अविद्यमानौ हस्तौ यस्य तं **पियारुं** पानकारकम् **अपादं** पादेन्द्रियरहितम् **अभिवर्द्धमानं वृत्रं** मेघमिव **सम्पिणक्** पिनष्टि, **तथा**—हे **इन्द्र** ! सभेश ! **शत्रूँस्तवसा** बलेन **जघन्थ** जहि ॥ १८ । ६९ ॥

**भाषार्थ**—हे (पुरुहूत) पुरु=बहुत सज्जनों के द्वारा सत्कृत, (इन्द्र) शत्रु-विदारक-सेनापति ! जैसे सूर्य—(सहदानुम्) एक साथ जल को देने वाले, (क्षियन्तम्) गतिशील, (कुणारुम्) शब्द करने वाले, (अहस्तम्) हाथों से रहित, (पियारुम्) जल पान कराने वाले, (अपादम्) पाद=पाँव इन्द्रिय से रहित (अभिवर्द्धमानम्) सब ओर बढ़ने वाले (वृत्रम्) मेघ=बादल को (सम्पिणक्) पीस देता है, वैसे—हे (इन्द्र) सेनापति ! तू—शत्रुओं को (तवसा) बल से (जघन्थ) मार ॥ १८ । ६९ ॥

[ हे'''इन्द्र ! यथा सूर्यः'''वृत्रं सम्पिणक् तथा'''शत्रूँस्तवसा जगन्थ ]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः । ये मनुष्याः सूर्यवत् प्रतापिनो भवन्ति, तेऽजातशत्रवो जायन्ते ।। १८ । ६९ ।।

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ।। जो मनुष्य सूर्य के समान प्रतापी होते हैं वे अजातशत्रु बनते हैं ।। १८ । ६९ ।।

**भाष्यसार**—१. **इन्द्र=सेनापति का कर्त्तव्य**—जैसे इन्द्र=सूर्य हाथ पैर से रहित जल देने वाले वृत्र=मेघ को छिन्न भिन्न कर देता है, वैसे ही श्रेष्ठ-पुरुषों से सत्कृत, और शत्रुओं का विदारक सेनापति तवसा=सब प्रकार के बलों का संग्रह करके बढ़ते हुए अपने विरोधियों का विनाश करके राज्य में सुख-शान्ति की सदा वृद्धि किया करे ।

२. **अलङ्कार**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है । जो सेनापति सूर्य की भाँति प्रतापी होते हैं, उनके विरोधी विरोध ही नहीं करते, यदि करते हैं तो बुरी तरह पिस जाते हैं ।। १८ । ६९ ।।

शासः । **इन्द्रः=सेनेशः** । निचृदनुष्टुप् । गान्धारः ।।

**अथ सेनापतिः कीदृशो भवेदित्युपदिश्यते ।।**

अब सेनापति कैसा हो, इस विषय का उपदेश किया है ।।

**वि नं ऽ इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।**

**यो ऽ अस्माँ२ऽ अभिदासत्यधरं गमया तमः ।। ७० ।।**

**पदार्थः**—(वि) (नः) अस्माकम् (इन्द्र) सेनेश (मृधः) मर्धन्त्यद्रीर्भवन्ति येषु तान् संग्रामान् । मृध इति संग्रामना० ।। निघं० २ । १७ ।। (जहि) (नीचा) न्यग्भूतान्नम्रान् । अत्र सुपां सुलुगित्याकारः (यच्छ) निगृह्णीहि (पृतन्यतः) आत्मनः पृतनां=सेनामिच्छतः (यः) विरोधी (अस्मान्) (अभिदासति) अभिमुखेनोपक्षयति (अधरम्) अधोगतिम् (गमय) प्रापय । अत्रान्येषामपीति दीर्घः (तमः) अन्धकारं कारागृहम् ।। ७० ।।

**प्रमाणार्थ**—(मृधः) संग्रामान् । 'मृधः' यह पद निघं० (२ । १७) में संग्राम-नामों में पठित है । (नीचा) यहाँ 'सुपां सुलुक्०' (७ । १ । ३९) से विभक्ति को आकार आदेश है । (गमय) यहाँ 'अन्येषामपि दृश्यते' (६ । ३ । १३७) से दीर्घ है ।।

**अन्वयः**—हे इन्द्र सेनेश ! त्वं मृधो वि जहि पृतन्यतो नः शत्रून्नीचा यच्छ योऽस्मानभिदासति तमधरं तमो गमय ।। ७० ।।

**सपदार्थान्वयः**—हे इन्द्र != सेनेश ! त्वं मृधः मर्धन्त्यद्रीर्भवन्ति येषु तान् संग्रामान् वि+जहि, पृतन्यतः आत्मनः पृतनां= सेनामिच्छतः नः अस्माकं **शत्रून् नीचा** न्यग्भूतान्नम्रान् **यच्छ** निगृह्णीहि, **यो** विरोधी **अस्मानभिदासति** अभिमुखेनोपक्षयति, **तमधरम्** अधोगतिं **तमः** अन्धकारं कारागृहं **गमय** प्रापय ।। १८ । ७० ।।

**भाषार्थ**—हे (इन्द्र) सेनापति ! तू—(मृधः) रक्त से आर्द्र करने वाले संग्रामों को (वि+जहि) विनष्ट कर, (पृतन्यतः) अपनी सेना की इच्छा करने वाले (नः) हमारे शत्रुओं को (नीचा) नम्र बनाकर (यच्छ) पकड़, (यः) जो विरोधी=शत्रु (अस्मान्) हमें (अभिदासति) क्षीण करता है उसे (अधरम्) अधोगति को एवं (तमः) अन्धकारमय कारागार में (गमय) पहुँचा ।। १८ । ७० ।।

[हे इन्द्र=सेनेश ! त्वं मृधो विजहि]

**भावार्थः**—सेनेशेन संग्रामा जेतव्याः, **भावार्थ**—सेनापति संग्रामों को जीते।

[नः शत्रून् नीचा यच्छ]

तेन नीचकर्मकारिणां निग्रहः कर्त्तव्यः, वह नीच कर्म करने वालों को निग्रह=गिरफ्तार करे।

[यो ऽस्मानभिदासति तमधरं तमो गमय]

राजप्रजाविरोधकारयिता भृशं दण्डनीयश्च ॥ १८ । ७० ॥ और राजा तथा प्रजा के विरोध करने वाले पुरुष को अधिक दण्ड देवे ॥ १८ । ७० ॥

**भा० पदार्थः**—विजहि=जेतव्यः । नीचा=नीचकर्मकारिणः । अभिदासति=विरोधं करोति ॥

**भाष्यसार**—**सेनापति का कर्त्तव्य**—इन्द्र=सब ऐश्वर्यों से सम्पन्न और शत्रुओं के विदारक सेनापति का प्रमुख कर्त्तव्य है कि वह विरोधी जनों के संघटन को सदा छिन्न-भिन्न किया करे, जिससे शत्रुओं की शक्ति न बढ़ सके। और राज्य में नीच कार्यों में प्रवृत्त हों, उनको पकड़ करके अन्धकार मय कारागार में रक्खे और उन्हें यथोचित दण्ड भी अवश्य देवे ॥ १८ । ७० ॥ ●

जयः । **इन्द्रः**=सेनाध्यक्षः । आर्षी त्रिष्टुप् । धैवतः ॥

**राजजनैः कीदृशैर्भवितव्यमित्युपदिश्यते ॥**

राजपुरुषों को कैसा होना चाहिए, इस विषय का उपदेश किया जाता है ॥

**मृगो न भीमः कुचरो गिरिष्ठाः परावत ऽआजगन्था परस्याः ।**
**सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून्ताढि वि मृधो नुदस्व ॥ ७१ ॥**

**पदार्थः**—(**मृगः**) मृगेन्द्रः=सिंहः (**न**) इव (**भीमः**) बिभेत्यस्मात् सः (**कुचरः**) यः कुत्सितां गतिं चरति सः (**गिरिष्ठाः**) यो गिरौ तिष्ठति सः (**परावतः**) दूरदेशात् (**आ**) समन्तात् (**जगन्थ**) गच्छ। अत्र पुरुषव्यत्ययः । अन्येषामपीति दीर्घश्च (**परस्याः**) शत्रूणां सेनाया उपरि (**सृकम्**) वज्रतुल्यं शस्त्रम्। सृक इति वज्रना० ॥ निघं० २ । २० ॥ (**संशाय**) सम्यक् सूक्ष्मबलान् कृत्वा (**पविम्**) पुनातु दुष्टान् दण्डयित्वा येन तम् (**इन्द्र**) सेनाध्यक्ष (**तिग्मम्**) तीक्ष्णीकृतम् (**वि**) (**शत्रून्**) (**ताढि**) आजहि (**वि**) (**मृधः**) (**नुदस्व**) ॥ १८ । ७१ ॥

**प्रमाणार्थ**—(**जगन्थ**) गच्छ। यहाँ पुरुष-व्यत्यय है तथा 'अन्येषामपि दृश्यते' (६ । ३ । १३७) से संहिता=मन्त्र में दीर्घ है। (**सृकम्**) वज्रतुल्यं शस्त्रम्। 'सृक' पद निघं० (२ । २०) में वज्र-नामों में पठित है ॥

**अन्वयः**—हे इन्द्र ! त्वं कुचरो गिरिष्ठा भीमो मृगो न परावत आ जगन्थ परस्यास्तिग्मं पविं सृकं संशाय शत्रून् विताढि मृधो विनुदस्व च ॥ १८ । ७१ ॥

**सपदार्थान्वयः**—हे इन्द्र! सेनाध्यक्ष! त्वं **कुचरः** यः कुत्सितां गतिं चरति सः **गिरिष्ठाः**

**भाषार्थ**—हे (इन्द्र) सेनाध्यक्ष ! तू—(कुचरः) कुत्सित गति करने वाले, (गिरिष्ठाः)

यो गिरौ तिष्ठति सः **भीमः** बिभेत्यस्मात् सः **मृगः** मृगेन्द्रः=सिंहः **न** इव **परावतः** दूरदेशात् **आजगन्थ** समन्तात् गच्छ ।

**परस्याः** शत्रूणां सेनाया उपरि **तिग्मं** तीक्ष्णीकृतं **पविं** पुनातु दुष्टान् दण्डयित्वा येन तं **सृकं** वज्रतुल्यं शस्त्रं **संशाय** सम्यक् सूक्ष्मबलान् कृत्वा **शत्रून् वि+ताढि** आजहि **मृधो विनुदस्व च** ॥ १८ । ७१ ॥

गिरि=पर्वत पर रहने वाले, (भीमः) भयंकर, (मृगः) मृगेन्द्र=सिंह के (न) समान (परावतः) दूर देश से (आजगन्थ) सब ओर जा ।

(परस्याः) शत्रु-सेनाओं के ऊपर (तिग्मम्) तीक्ष्ण किए हुए, (पविम्) दुष्टों को दण्ड देकर पवित्र करने वाले (सृकम्) वज्र के तुल्य शस्त्र को (संशाय) सूक्ष्म करके शत्रु का (वि+ताढि) हनन कर, और (मृधः) संग्रामों को (विनुदस्व) दूर हटा ॥ १८ । ७१ ॥

**[हे इन्द्र ! त्वं···मृगो न···आजगन्थ, परस्यास्तिग्मं···सृकं संशाय शत्रून् विताढि, मृधो विनुदस्व च]**

**भावार्थः**—ये सेनापुरुषाः सिंहवत् पराक्रम्य तीक्ष्णैः शस्त्रैः शत्रुसेनाङ्गानि च्छित्त्वा संग्रामान् विजयन्ते, तेऽतुलां प्रशंसां प्राप्नुवन्ति; नेतरे क्षुद्राशया भीरवः ॥ १८ । ७१ ॥

**भावार्थ**—जो सेना के पुरुष सिंह के समान पराक्रम करके तीक्ष्ण शस्त्रों से शत्रु के सेना-अङ्गों का छेदन करके संग्रामों को जीतते हैं वे अतुल प्रशंसा को प्राप्त करते हैं; दूसरे क्षुद्राशय भीरु लोग नहीं ॥ १८ । ७१ ॥

**भा० पदार्थः**—मृधः=संग्रामान् । विनुदस्व=विजयस्व ।

**भाष्यसार**—**सेनाध्यक्ष कैसा होना चाहिए ?**—इन्द्रः=शत्रुओं को विदीर्ण करने वाला सेना का अध्यक्ष पर्वतों में अथवा वनों में विचरण करने वाले सिंह के समान पराक्रमशाली तथा स्फूर्ति वाला हो । वह अपने विरोधी शत्रुओं को तीक्ष्ण शस्त्रादि से दण्ड देने वाला हो, और अपने प्रभाव से शत्रुओं को डराकर संग्रामों को ही दूर हटा देने वाला हो ॥ १८ । ७१ ॥

विश्वामित्रः । **अग्निः=सूर्यः** । आर्षी गायत्री । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

राजपुरुषों को कैसा होना चाहिए, यह फिर उपदेश किया है ॥

**वैश्वानरो न ऽ ऊतय ऽ आ प्र यातु परावतः । अग्निर्नः सुष्टुतीरुप ॥ ७२ ॥**

**पदार्थः**—**(वैश्वानरः)** विश्वेषु नरेषु यो राजते स एव **(नः)** अस्माकम् **(ऊतये)** रक्षाद्याय **(आ) (प्र) (यातु)** प्राप्नोतु **(परावतः)** दूरदेशात् **(अग्निः)** सूर्यः **(नः)** अस्माकम् **(सुष्टुतीः)** या शोभनाः स्तुतयस्ताः **(उप)** ॥ ७२ ॥

**अन्वयः**—हे सेनेश सभेश ! यथा वैश्वानरोऽग्निः सूर्यः परावतः सर्वान् पदार्थान् प्राप्नोति तथा भवानूतये न आ प्र यातु यथाऽग्निर्विद्युत् संहितास्ति तथा त्वं नः सुष्टुतीरुपशृणु ॥ ७२ ॥

**सपदार्थान्वयः**—**हे सेनेश सभेश ! यथा वैश्वानरः** विश्वेषु नरेषु यो राजते स एव **अग्निः=सूर्यः परावतः** दूरदेशात् **सर्वान् पदार्थान् प्राप्नोति, तथा भवानूतये** रक्षाद्याय **नः** अस्माकम्

**भाषार्थ**—हे सेनापति एवं सभापति ! जैसे—(वैश्वानरः) सब नरों में राजमान=प्रकाशमान (अग्निः) सूर्य (परावतः) दूर देश से सब पदार्थों को प्राप्त होता है, वैसे आप (ऊतये) रक्षा

**आ+प्र+यातु** प्राप्नोतु ।

**यथाऽग्निः=विद्युत् संहितास्ति तथा त्वं नः** अस्माकं **सुष्टुतीः** या शोभनाः स्तुतयस्ताः **उपशृणु** ॥ १८ । ७२ ॥

आदि के लिए (नः) हमें (आ+प्र+यातु) सब ओर से प्राप्त होओ ।

जैसे—(अग्निः) विद्युत् संन्निकट है वैसे तू (नः) हमारी (सुष्टुतीः) उत्तम स्तुतियों को (उपशृणु) सुन ॥ १८ । ७२ ॥

[हे सेनेश सभेश ! यथा वैश्वानरोऽग्निः=सूर्यः परावतः सर्वान् पदार्थान् प्राप्नोति]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः । यः सूर्यवद् दूरस्थोऽपि न्यायेन सर्वान् पदार्थान् प्रकाशयति, यथा च दूरस्थोऽपि सद्गुणाढ्यो जनः प्रशस्यते तथा राजपुरुषैर्भवितव्यम् ॥ १८ । ७२ ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ॥ जो सूर्य के समान दूर होकर भी न्याय से सब पदार्थों को प्रकाशित करता है, और जैसे दूर स्थित, सद्गुणों से भरपूर पुरुष प्रशंसित होता है वैसे राजपुरुष भी बनें ॥ १८ । ७२ ॥

**भा० पदार्थः**—वैश्वानरः=सद्गुणाढ्यो जनः ।

**भाष्यसार**—१. **राजपुरुष सूर्य के समान हों**—जैसे वैश्वानरः=सब पदार्थों में प्रकाशमान सूर्य बहुत दूर होता हुआ भी सब प्राणियों की रक्षा के निमित्त सबको प्राप्त होता है, वैसे ही सूर्यवत् प्रतापी राजपुरुष ऐसे प्रभावशाली हों, जो दूर होते हुए भी अपने प्रभाव से सबकी रक्षा करने वाले हों और प्रजा की बातों को सुनने वाले भी हों ।

२. अलङ्कार—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है । दूरस्थ सूर्य के समान राजपुरुष न्यायादि से सब को प्रकाशित किया करें ॥ १८ । ७२ ॥

कुत्सः । **अग्निः=भौतिकाग्निः** । आर्षी त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

राजपुरुषों को कैसा होना चाहिए, यह उपदेश किया है ॥

**पृष्टो दिवि पृष्टो ऽ अग्निः पृथिव्यां पृष्टो विश्वा ऽ ओषधीरा विवेश ।**
**वैश्वानरः सहसा पृष्टो ऽ अग्निः स नो दिवा स रिषस्पातु नक्तम् ॥ ७३ ॥**

**पदार्थः**—((**पृष्टः**) ज्ञातुमिष्टः (**दिवि**) सूर्ये (**पृष्टः**) (**अग्निः**) प्रसिद्धः पावकः (**पृथिव्याम्**) (**पृष्टः**) (**विश्वाः**) अखिलाः (**ओषधीः**) सोमयवाद्याः (**आ**) (**विवेश**) विष्टोऽस्ति (**वैश्वानरः**) विश्वस्य नेता स एव (**सहसा**) बलेन (**पृष्टः**) (**अग्निः**) विद्युत् (**सः**) (**नः**) अस्मान् (**दिवा**) दिवसे (**सः**) (**रिषः**) हिंसकात् (**पातु**) रक्षतु (**नक्तम्**) रात्रौ ॥ ७३ ॥

**अन्वयः**—मनुष्यैर्यो दिवि पृष्टोऽग्निः पृथिव्यां पृष्टोऽग्निर्जले वायौ च पृष्टोऽग्निः सहसा वैश्वानरः पृष्टोऽग्निर्विश्वा ओषधीराविवेश स दिवा स च नक्तं यथा पाति तथा सेनेशो भवान्नोऽस्मान् रिषः सततं पातु ॥ ७३ ॥

**सपदार्थान्वयः**—**मनुष्यैर्यो दिवि** सूर्ये **पृष्टः** ज्ञातुमिष्टः **अग्निः** प्रसिद्धः पावकः **पृथिव्यां पृष्टः** ज्ञातुमिष्टः **अग्निर्जले वायौ च**

**भाषार्थ**—मनुष्य—जो (दिवि) सूर्य में (पृष्टः) जानने योग्य (अग्निः) प्रसिद्ध अग्नि, (पृथिव्याम्) पृथिवी में (पृष्टः) जानने योग्य अग्नि,

**पृष्टः** ज्ञातुमिष्टः **अग्निः** विद्युत् **सहसा** बलेन **वैश्वानरः** विश्वस्य नेता स एव **पृष्टः** ज्ञातुमिष्टः **अग्निः** विद्युत् **विश्वाः** अखिलाः **ओषधीः** सोमयवाद्याः **आविवेश** विष्टोऽस्ति [इति वेद्यम] ।

जल और वायु में (पृष्टः) जानने योग्य (अग्निः) विद्युत्, (सहसा) बल से (वैश्वानरः) विश्व का नेता (पृष्टः) जानने योग्य (अग्निः) विद्युत् (विश्वाः) सब (ओषधीः) सोम, यव=जौ आदि ओषधियों में (आविवेश) प्रविष्ट है [ऐसा समझें] ।

**स दिवा** दिवसे **स च नक्तं** रात्रौ **यथा पाति तथा सेनेशो भवान्नो**=ऽस्मान् **रिषः** हिंसकात् **सततं पातु** रक्षतु ।। १८ । ७३ ।।

(सः) वह (दिवा) दिन में और (सः) वह (नक्तम्) रात में जैसे रक्षा करता है वैसे आप सेनापति (नः) हमारी (रिषः) हिंसक पुरुष से सदा (पातु) रक्षा करो ।। १८ । ७३ ।।

**[यो दिवि पृष्टोऽग्निः, पृथिव्यां पृष्टोऽग्निः, अग्निर्विश्वा ओषधीराविवेश]**

**भावार्थः**—ये मनुष्या आकाशस्थं सूर्यं, पृथिवीस्थं ज्वलितं, सर्वपदार्थव्यापिनं विद्युदग्निं च विद्वद्भ्यो निश्चित्य कार्येषु संयुञ्जते—

**भावार्थ**—जो मनुष्य आकाश में स्थित सूर्य को, पृथिवी में स्थित अग्नि को, और सब पदार्थों में व्यापक विद्युत् रूप अग्नि को विद्वानों से निश्चित जानकर कार्यों में संयुक्त करते हैं—

**[स···नोऽस्मान् रिषः···पातु]**

ते शत्रुभ्यो निर्भया जायन्ते ।। १८ । ७३ ।।

वे शत्रुओं से निर्भय रहते हैं ।। १८ । ७३ ।।

**भाष्यसार**—**अग्नि के समान राजपुरुषों का कर्त्तव्य**—जैसे वैश्वानरः=सब का नेता अग्नि द्युलोक में सूर्य के रूप में, वायु में विद्युद्रूप में, और पृथिवी तथा सब ओषधियों में भौतिकाग्नि के रूप में विद्यमान होकर सब प्राणियों की रक्षा करता है, वैसे ही जो राजपुरुष इस अग्नि को जानकर इस का उपयोग हिंसक वृत्ति वालों से रक्षा करने में करते हैं, वे सदा निर्भय रहते हैं ।। ७३ ।।

भरद्वाजः । **अग्निः**=**सेनेशः** । निचृत्त्रिष्टुप् । धैवतः ।।

**अथ प्रजाराजजनैरितरेतरं किं कार्यमित्याह ।।**

अब प्रजा और राजपुरुषों को परस्पर क्या करना चाहिए, इस विषय का उपदेश किया है ।।

**अ॒श्याम॒ तं काम॑मग्ने॒ तवो॒ती ऽ अ॒श्याम॑ र॒यिꣳ र॑यिवः सु॒वीर॑म् ।**
**अ॒श्याम॒ वाज॑म॒भि वा॒जय॑न्तो॒ऽश्याम॑ द्यु॒म्नम॑जराज॒रं ते ।। ७४ ।।**

**पदार्थः**—(**अश्याम**) प्राप्नुयाम (**तम्**) (**कामम्**) (**अग्ने**) युद्धविद्यावित्सेनेश (**तव**) (**ऊती**) रक्षाद्यया क्रियया । **अत्र सुपां सुलुगिति पूर्वसवर्णः** (**अश्याम**) (**रयिम्**) राज्यश्रियम् (**रयिवः**) प्रशस्ता रययो विद्यन्ते यस्य तत्सम्बुद्धौ । **अत्र छन्दसीर इति मस्य वः** (**सुवीरम्**) शोभना वीराः प्राप्यन्ते यस्मात्तम् (**अश्याम**) (**वाजम्**) संग्रामविजयम् (**अभि**) (**वाजयन्तः**) संग्रामयन्तो=योधयन्तः (**अश्याम**) (**द्युम्नम्**) यशो धनं वा (**अजर**) जरादोषरहित (**अजरम्**) जरादोषरहितम् (**ते**) तव ।। १८ । ७४ ।।

**प्रमाणार्थ**—(**ऊती**) यहाँ 'सुपां सुलुक्०' (७ । १ । ३९) से पूर्व सवर्ण आदेश है । (**रयिवः**) यहाँ 'छन्दसीरः' (८ । २ । १५) से 'मतुप्' के 'म' के स्थान में 'व' आदेश है ।।

**अन्वयः**—हे अग्ने ! वयं तवोती तं काममश्याम । हे रयिवः सुवीरं रयिमश्याम वाजयन्तो वयं वाजमभ्यश्याम । हे अजर ! तेऽजरं द्युम्नमश्याम ॥ १८ । ७४ ॥

**सपदार्थान्वयः**—हे **अग्ने** ! युद्धविद्यावित्सेनेश ! **वयं तवोती** रक्षाद्यया क्रियया **तं काममश्याम** प्राप्नुयाम ।

हे **रयिवः** ! प्रशस्ता रययो विद्यन्ते यस्य तत्सम्बुद्धौ ! **सुवीरं** शोभना वीराः प्राप्यन्ते यस्मात्तं **रयिं** राज्यश्रियम् **अश्याम** प्राप्नुयाम ।

**वाजयन्तः** संग्रामयन्तो=योधयन्तः **वयं वाजं** संग्रामविजयम् **अभ्यश्याम** प्राप्नुयाम ।

हे **अजर** ! जरादोषरहित !=**ते** तव **अजरं** जरादोषरहितं **द्युम्नं** यशो धनं वा **अश्याम** प्राप्नुयाम ॥ १८ । ७४ ॥

**भाषार्थ**—हे (अग्ने) युद्ध विद्या के वेत्ता सेनापति ! हम लोग—(तव) तेरी (ऊती) रक्षादि क्रिया से (तम्) अपनी अभीष्ट (कामम्) कामना को (अश्याम) प्राप्त करें ।

हे (रयिवः) प्रशस्त रयि=धनों वाले राजन् ! हम लोग—(सुवीरम्) उत्तम वीरों की प्राप्ति के निमित्त (रयिम्) राज्य-लक्ष्मी को (अश्याम) प्राप्त करें ।

(वाजयन्तः) संग्राम=युद्ध करते हुए हम लोग—(वाजम्) संग्राम में विजय को (अभ्यश्याम) प्राप्त करें ।

हे (अजर) जरा दोष से रहित राजन् ! हम (ते) तेरे (अजरम्) जरा दोष से रहित (द्युम्नम्) यश वा धन को (अश्याम) प्राप्त करें ॥१८ । ७४॥

**[हे अग्ने ! वयं तवोती तं काममश्याम]**

**भावार्थः**—प्रजास्थैर्मनुष्यै राजपुरुषरक्षया, राजपुरुषैः प्रजाजनरक्षणेन च परस्परं सर्वे कामाः प्राप्तव्याः ॥ १८ । ७४ ॥

**भावार्थ**—प्रजा के मनुष्य—राजपुरुषों की रक्षा से और राजपुरुष प्रजा जनों के रक्षण से परस्पर सब कामनाओं को प्राप्त करें ॥१८ । ७४ ॥

**भाष्यसार**—**सेनापति कैसा होना चाहिए ?**—अग्ने=युद्ध विद्या की कलाओं का वेत्ता, रयिवः=प्रशस्त ऐश्वर्यों वाला, अजर=बुढ़ापे से रहित नवयुवक, निष्कलङ्क यश से प्रसिद्ध प्रजा की रक्षा करने वाला और श्रेष्ठ-पुरुषों की कामनाओं को पूर्ण करने वाला सेनापति होना चाहिए । तब ही संग्राम में विजय और ऐश्वर्य की वृद्धि निरन्तर होती रहती है ॥ १८ । ७४ ॥

उत्कीलः । **अग्निः**=विद्वान् । आर्षी त्रिष्टुप् । धैवतः ॥

**पुरुषार्थेन किं साध्यमित्याह ॥**

पुरुषार्थ से क्या सिद्ध करना चाहिए, इस विषय का उपदेश किया है ॥

**वयं ते ऽ अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।**
**यजिष्ठेन मनसा यक्षि देवानस्त्रेधता मन्मना विप्रो ऽ अग्ने ॥ ७५ ॥**

**पदार्थः**—(वयम्) (ते) तव (**अद्य**) अस्मिन्दिने (**ररिम**) दद्मः । रा दाने लिट् । अन्येषामपि दृश्यत इति दीर्घः । (हि) खलु (**कामम्**) (**उत्तानहस्ताः**) उत्तानावूर्ध्वंगतावभयदातारौ हस्तौ येषां ते (**नमसा**) सत्कारेण (**उपसद्य**) सामीप्यं प्राप्य (**यजिष्ठेन**) अतिशयेन यष्टृ=संगन्तृ तेन (**मनसा**) विज्ञानेन (**यक्षि**) यजसि (**देवान्**) विदुषः (**अस्त्रेधता**) इतस्ततो गमनरहितेन=स्थिरेण (**मन्मना**) येन मन्यते=विजानाति तेन (**विप्रः**) मेधावी (**अग्ने**) विद्वन् ॥ १८ । ७५ ॥

**प्रमाणार्थ**—(ररिम) यहाँ 'रा दाने' धातु से लिट् लकार है। तथा 'अन्येषामपि दृश्यते' (६।३।१३७) से संहिता=मन्त्र में दीर्घ है॥

**अन्वयः**—हे अग्ने! उत्तानहस्ता वयं ते नमसोपसद्याद्य कामं हि ररिम यथा विप्रोऽस्रेधता मन्मना यजिष्ठेन मनसा देवान् यजति संगच्छते यथा च त्वं यक्षि तथा वयमपि यजेम॥ १८।७५॥

**सपदार्थान्वयः**—हे **अग्ने**! विद्वान्! **उत्तानहस्ताः** उत्तानावूर्ध्वगतावभयदातारौ हस्तौ येषां ते **वयं ते** तव **नमसा** सत्कारेण **उपसद्य** सामीप्यं प्राप्य **अद्य** अस्मिन्दिने **कामं हि** खलु **ररिम** दद्मः।

**यथा विप्रः** मेधावी **अस्रेधता** इतस्ततो गमन-रहितेन=स्थिरेण **मन्मना** येन मन्यते=विजानाति तेन **यजिष्ठेन** अतिशयेन यष्टृ=सङ्गन्तृ तेन **मनसा** विज्ञानेन **देवान्** विदुषः **यजति**=सङ्गच्छते, **यथा च त्वं यक्षि** यजसि, **तथा वयमपि यजेम**॥१८।७५॥

**भाषार्थ**—हे (अग्ने) विद्वान्! (उत्तान-हस्ताः) ऊपर को किए अभय-दाता हाथों वाले (वयम्) हम लोग—(ते) तेरे (नमसा) सत्कार से (उपसद्य) समीप होकर (अद्य) आज (कामम्) इच्छा को (हि) निश्चय से (ररिम) प्रदान करते हैं।

जैसे—(विप्रः) मेधावी पुरुष (अस्रेधता) इधर-उधर गति से रहित अर्थात् स्थिर (मन्मना) मनन=ज्ञान के साधन, (यजिष्ठेन) अत्यन्त यष्टा=संगन्ता (मनसा) विज्ञान-युक्त मन से (देवान्) विद्वानों का (यजति) संग करता है, और जैसे तू—(यक्षि) संग करता है वैसे हम भी विद्वानों का संग करें॥ १८।७५॥

[हे अग्ने…वयं…कामं हि ररिम, विप्र…देवान् यजति=सङ्गच्छते]

**भावार्थः**—ये मनुष्याः पुरुषार्थेनालङ्कामाः स्युस्ते विद्वत्संगेनैतत् प्राप्तुं शक्नुयुः॥ १८।७५॥

**भावार्थ**—जो मनुष्य पुरुषार्थ से कामना को पूर्ण करना चाहें वे विद्वानों के संग से उसे प्राप्त कर सकते हैं॥ १८।७५॥

**भाष्यसार**—**विद्वद्धर्म का वर्णन**—विप्रः=मेधा-सम्पन्न विद्वान् मनुष्य स्थिर-चित्त होकर विज्ञान-युक्त मन से विद्वानों की संगति से सदा उन्नति किया करें। और दूसरे मनुष्य भी विद्वानों की संगति से और पुरुषार्थ से अपनी-अपनी कामनाओं की पूर्ति सदा किया करें॥ १८।७५॥ ●

उत्कीलः। **विश्वेदेवाः**=सर्वे विद्वांसः। निचृदनुष्टुप्। गान्धारः॥

**अथ सर्वविद्वत्कर्त्तव्यमाह॥**

अब सब विद्वानों के कर्त्तव्य का उपदेश किया है॥

**धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः। सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे॥७६॥**

**पदार्थः**—(**धामच्छत्**) यो धामानि छादयति=संवृणोति सः (**अग्निः**) विद्वान् (**इन्द्रः**) परमैश्वर्यवान् (**ब्रह्मा**) चतुर्वेदवित् (**देवः**) विद्यादाता (**बृहस्पतिः**) अध्यापकः (**सचेतसः**) ये चेतसा=प्रज्ञया सह वर्त्तन्ते (**विश्वे**) सर्वे (**देवाः**) विद्वांसः (**यज्ञम्**) उक्तम् (**प्र**) (**अवन्तु**) कामयन्ताम् (**नः**) अस्माकम् (**शुभे**) कल्याणाय॥ ७६॥

**अन्वयः**—हे मनुष्याः! देवो धामच्छदग्निरिन्द्रो ब्रह्मा बृहस्पतिश्चेमे सचेतसो विश्वेदेवाः नः शुभे यज्ञं प्रावन्तु॥ ७६॥

**सपदार्थान्वयः**—हे मनुष्याः ! देवः विद्यादाता **धामच्छद्** यो धामानि छादयति=संवृणोति सः **अग्निः** विद्वान् **इन्द्रः** परमैश्वर्यवान् **ब्रह्मा** चतुर्वेदविद् **बृहस्पतिः** अध्यापकः **चेमे सचेतसः** ये चेतसा=प्रज्ञया सह वर्त्तन्ते **विश्वे** सर्वे **देवाः** विद्वांसः **नः** अस्माकं **शुभे** कल्याणाय **यज्ञम्** उक्तं **प्रावन्तु** कामयन्ताम् ॥ १८ । ७६ ॥

**भाषार्थ**—हे मनुष्यो ! (देवः) विद्या का दाता, (धामच्छद्) धामों को आच्छादित करने वाला, (अग्निः) विद्वान्, (इन्द्रः) परम ऐश्वर्य वाला, (ब्रह्मा) चारों वेदों का वेत्ता और (बृहस्पतिः) अध्यापक ये (सचेतसः) चेत=प्रज्ञा से युक्त (विश्वे) सब (देवाः) विद्वान् लोग (नः) हमारे (शुभे) कल्याण के लिए (यज्ञम्) पूर्वोक्त संग की (प्रावन्तु) कामना करें ॥ १८ । ७६ ॥

[**विश्वे देवा नः शुभे यज्ञं प्रावन्तु**]

**भावार्थः**—सर्वे विद्वांसः सर्वेषां सुखाय सततं सत्योपदेशान् कुर्वन्तु ॥ १८ । ७६ ॥

**भावार्थ**—सब विद्वान् लोग सब के सुख के लिए सत्य उपदेश करें ॥ १८ । ७६ ॥

**भा० पदार्थः**—शुभे=सुखाय । यज्ञम्=सत्योपदेशम् ॥

**भाष्यसार**—**विद्वद्धर्म का वर्णन**—देवाः=विद्यावृद्धि की कामना करने वाले, सचेतसः=प्रज्ञा सम्पन्न अग्नि के तुल्य विद्या से प्रदीप्त चारों वेदों के विद्वान् और अध्यापन कार्य में रत शिक्षक सब प्राणियों की भलाई के लिए यज्ञ=विद्वानों का सत्कार, संगति और सद्विद्यादि का दान सदा किया करें ॥ १८ । ७६ ॥

उशना । **विश्वेदेवाः**=विद्वांसः । निचृदनुष्टुप् । गान्धारः ॥

**अथ सभेशसेनेशयोः कर्त्तव्यमाह ॥**

अब सभापति तथा सेनापति के कर्त्तव्य का उपदेश किया है ॥

**त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ ७७ ॥**

**पदार्थः**—(**त्वम्**) सभेशः (**यविष्ठ**) अतिशयेन युवन् (**दाशुषः**) विद्यादातॄन् (**नॄन्**) अध्यापकान्मनुष्यान् (**पाहि**) (**शृणुधि**) **अत्रान्येषामपि दृश्यत इति दीर्घः** । (**गिरः**) विदुषां विद्यासुशिक्षिता वाचः (**रक्ष**) **अत्र द्व्यचोऽतस्तिङ इति दीर्घः** । (**तोकम्**) पुत्रादिकम् (**उत**) (**त्मना**) आत्मना ॥ ७७ ॥

**प्रमाणार्थ**—(**शृणुधि**) यहाँ 'अन्येषामपि दृश्यते' (६ । ३ । १३७) से संहिता=मन्त्र में दीर्घ है । (रक्ष) यहाँ द्व्यचोऽतस्तिङः' (६ । ३ । १३५) से संहिता=मन्त्र में दीर्घ है ॥

**अन्वयः**—हे यविष्ठ राजन् ! त्वं दाशुषो नॄन् पाह्येतेषां गिरः शृणुधि यो वीरो युद्धे म्रियेत तस्य तोकं त्मना रक्षोतापि स्त्रियादिकं च ॥ ७७ ॥

**सपदार्थान्वयः**—हे **यविष्ठ** != **राजन्** ! अतिशयेन युवन् ! त्वं सभेशः **दाशुषः** विद्यादातॄन् **नॄन्** अध्यापकान्मनुष्यान् **पाहि**, **एतेषां गिरः** विदुषां विद्या-सुशिक्षिता वाचः **शृणुधि** ।

**यो वीरो युद्धे म्रियेत तस्य तोकं** पुत्रादिकं

**भाषार्थ**—हे (यविष्ठ) अत्यन्त युवक राजन् ! (त्वम्) तू सभापति होकर (दाशुषः) विद्या के दाता (नॄन्) अध्यापक लोगों की (पाहि) रक्षा कर; इन (गिरः) विद्वानों की विद्या और सुशिक्षा से युक्त वाणियों को (शृणुधि) सुन ।

जो वीर पुरुष युद्ध में मर जावे उसके (तोकम्)

**त्मना आत्मना रक्षोत=अपि स्त्रियादिकं च ॥**

पुत्र आदि की (त्मना) आत्मा से (रक्ष) रक्षा कर (उत) और उसकी स्त्री आदि की भी रक्षा कर ॥

[हे यविष्ठ=राजन् त्वं दाशुषो नॄन् पाहि, एतेषां गिरः शृणुधि]

**भावार्थः**—सभेशसेनेशयोर्द्वे कर्मणी अवश्यं कर्त्तव्ये स्तः—एकं-विदुषां पालनं तदुपदेशश्रवणं च,

**भावार्थ**—सभापति और सेनापति को दो कार्य अवश्य करने चाहिए—पहला विद्वानों का पालन और उनके उपदेश का श्रवण,

**[यो वीरो युद्धे म्रियेत तस्य तोकं त्मना रक्ष, उत=अपि स्त्रियादिकं च]**

द्वितीयं—युद्धे हतानामपत्यस्त्र्यादिपालनं च, एवं समाचरतां पुरुषाणां सदा विजयः, श्रीः सुखानि च भवन्तीति विद्वद्भिर्ध्येयम् ॥ १८ । ७७ ॥

दूसरा—युद्ध में मरे वीरों के पुत्र और स्त्री आदि का पालन करे। इस प्रकार करने वाले पुरुषों को सदा विजय, श्री=लक्ष्मी और सुख प्राप्त होते हैं, ऐसा विद्वानों को जानने योग्य है ॥

**भा० पदार्थः**—यविष्ठ=सभेश, सेनेश। दाशुषः=विदुषः। गिरः=उपदेशः। तोकम्=अपत्यम् ।

**भाष्यसार—विद्वान् सभापति तथा सेनापति का कर्त्तव्य**—सभापति आदि राजपुरुषों का प्रथम कर्त्तव्य है कि वे दाशुषः=विद्या के दाता अध्यापक अथवा उपदेशकों की सदा रक्षा किया करें। और उनकी दी गई शिक्षाओं को ध्यान से सुनें। और दूसरा कर्त्तव्य यह है कि युद्ध में मारे गये पुरुषों की सन्तानादि की रक्षा अपनी सन्तान की तरह किया करें। इससे राज्य में सदा ऐश्वर्य की वृद्धि और शत्रुओं पर विजय प्राप्त होती है। १८। ७७ ॥

**[पूर्वापराध्यायार्थसंगतिमाह]**

अत्र गणितविद्याराजप्रजापठकपाठककर्मादि-वर्णनादेतदध्यायोक्तार्थानां पूर्वाध्यायोक्तार्थैः सह संगतिरस्तीति बोध्यम् ॥ १८ । ७७ ॥

इस अध्याय में गणित-विद्या, राजा, प्रजा, पढ़ने-पढ़ाने वालों के कर्म आदि के वर्णन से इस अध्याय में प्रतिपादित अर्थों की पूर्व अध्याय में प्रतिपादित अर्थों के साथ संगति है; ऐसा जानें ॥

**इति श्रीयुतपण्डितसुदर्शनदेवाचार्यविरचिते दयानन्द-यजुर्वेदभाष्य-भास्करे अष्टादशोऽध्यायः सम्पूर्णः ।**

॥ ओ३म् ॥

# ❋ अथैकोनविंशोऽध्यायारम्भः ❋

ओं विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव । यद्भ॒द्रं तन्न॒ऽआ सु॑व ॥ १ ॥

य० ३० । ३ ॥

प्रजापतिः । **ओम्ः**=ऐश्वर्य्ययुक्तो वैद्यः । निचृच्छक्वरी । धैवतः ॥

**मनुष्यैर्धर्मार्थकाममोक्षसिद्धये किं कर्त्तव्यमित्याह ॥**

अब उन्नीसवें अध्याय का आरम्भ है। इसके प्रथम मन्त्र में मनुष्यों को धर्म, अर्थ, काम और मोक्ष की सिद्धि के लिए क्या करना चाहिए, इस विषय का उपदेश किया है ॥

**स्वा॒द्वीं त्वा॑ स्वा॒दुना॑ ती॒व्रां ती॒व्रेणा॒मृता॑म॒मृते॑न । मधु॑मतीं॒ मधु॑मता सृ॒जामि॒ सꣳसोमे॑न ।**
**सोमो॒ऽस्य॒श्विभ्यां॑ पच्यस्व॒ सर॑स्वत्यै पच्य॒स्वेन्द्रा॑य सु॒त्राम्णे॑ पच्यस्व ॥ १ ॥**

**पदार्थः**—(**स्वाद्वीम्**) सुस्वादुयुक्ताम् (**त्वा**) त्वाम् (**स्वादुना**) मधुरादिना (**तीव्राम्**) तीक्ष्णस्वभावाम् (**तीव्रेण**) आशुकारिगुणेन (**अमृताम्**) अमृतात्मिकाम् (**अमृतेन**) सर्वरोगप्रहारकेण गुणेन (**मधुमतीम्**) प्रशस्तमधुरगुणयुक्ताम् (**मधुमता**) स्वादिष्ठगुणेन (**सृजामि**) निष्पादयामि (**सम्**) (**सोमेन**) सोमलताद्योषधिसमूहेन (**सोमः**) ऐश्वर्य्ययुक्तः (**असि**) (**अश्विभ्याम्**) व्याप्तविद्याभ्यां स्त्रीपुरुषाभ्याम् (**पच्यस्व**) परिपक्वां कुरु (**सरस्वत्यै**) विद्यासुशिक्षितवाणीयुक्तायै स्त्रियै (**पच्यस्व**) (**इन्द्राय**) ऐश्वर्य्ययुक्ताय पुरुषाय (**सुत्राम्णे**) यः सर्वान् दुःखेभ्यः सुष्ठु त्रायते तस्मै (**पच्यस्व**) ॥ १ ॥

**अन्वयः**—हे वैद्य यस्त्वं ! सोमोऽसि तं त्वौषधीविद्यायां संसृजामि यथाऽहं यां स्वादुना सह स्वाद्वीं तीव्रेण सह तीव्राममृतेन सहाऽमृतां मधुमता सोमेन सह मधुमतीमोषधीं संसृजामि तथैतां त्वमश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्व सुत्राम्ण इन्द्राय पच्यस्व ॥ १ ॥

**सपदार्थान्वयः**—हे वैद्य ! यस्त्वं **सोमः** ऐश्वर्ययुक्तः **असि, तं त्वा** त्वाम् **ओषधिविद्यायां सम्+सृजामि** निष्पादयामि ।

**यथाऽहं यां स्वादुना** मधुरादिना **सह स्वाद्वीं**

**भावार्थ**—हे वैद्य ! जो तू—(सोमः) ऐश्वर्य से युक्त है सो (त्वा) तुझे ओषधि विद्या में (सम्+सृजामि) निष्पन्न करता हूँ ।

जैसे मैं जिस—(स्वाद्वीम्) उत्तम स्वाद से

सुस्वादुयुक्तां **तीव्रेण** आशुकारिगुणेन **सह तीव्रां** तीक्ष्णस्वभावाम् **अमृतेन** सर्वरोगप्रहारकेण गुणेन **सहाऽमृताम्** अमृतात्मिकां **मधुमता** स्वादिष्ठगुणेन **सोमेन** सोमलताद्योषधिसमूहेन **सह मधुमतीं** प्रशस्त-मधुरगुणयुक्ताम् **ओषधीं संसृजामि** निष्पादयामि, **तथैतां त्वमश्विभ्यां** व्याप्तविद्याभ्यां स्त्रीपुरुषाभ्यां **पच्यस्व** परिपक्वां कुरु, **सरस्वत्यै** विद्यासुशिक्षित-वाणीयुक्तायै स्त्रियै **पच्यस्व** परिपक्वां कुरु, **सुत्राम्णे** यः सर्वान् दुःखेभ्यः सुष्ठु त्रायते तस्मै **इन्द्राय** ऐश्वर्य-युक्ताय पुरुषाय **पच्यस्व** परिपक्वां कुरु ॥ १९ । १ ॥

युक्त, (तीव्रेण) शीघ्रकारी गुण से युक्त (तीव्राम्) तीक्ष्ण स्वभाव वाली, (अमृतेन) सब रोगों के हारक गुण से युक्त (अमृताम्) अमृत रूप, (मधुमता) स्वादिष्ठ (सोमेन) सोम-लता आदि ओषधियों सहित (मधुमतीम्) प्रशस्त मधुर गुण वाली ओषधि को (संसृजामि) सिद्ध करता हूँ; वैसे इसे तू—(अश्विभ्याम्) विद्या में व्याप्त स्त्री-पुरुषों के लिए (पच्यस्व) पका, (सरस्वत्यै) विद्या और सुशिक्षा से युक्त वाणी वाली विदुषी स्त्री के लिए (पच्यस्व) पका, (सुत्राम्णे) सब की दुःखों से रक्षा करने वाले, (इन्द्राय) ऐश्वर्य से युक्त पुरुष के लिए (पच्यस्व) पका ॥ १९ । १ ॥

**[हे वैद्य !......त्वौषधीविद्यायां संसृजामि । यथाहं यां स्वादुना सह स्वाद्वीं......ओषधीं संसृजामि तथैतां त्वमश्विभ्यां पच्यस्व]**

**भावार्थः**—मनुष्यैर्वैद्यकशास्त्ररीत्याऽनेकानि मधुरादिप्रशस्तस्वादयुक्तान्यौषधानि निर्माय तत्सेवनेनारोग्यं सम्पाद्य धर्मार्थकाममोक्षसिद्धये सततं प्रयतितव्यम् ॥ १९ । १ ॥

**भावार्थ**—मनुष्य-वैद्यक शास्त्र की रीति से अनेक मधुर आदि प्रशस्त स्वाद से युक्त ओषधों का निर्माण करके, उसके सेवन से आरोग्य को सिद्ध करके, धर्म, अर्थ, काम और मोक्ष के लिए सदा प्रयत्न करें ॥ १९ । १ ॥

**भाष्यसार**—**वैद्यों का कर्त्तव्य**—सोम=ऐश्वर्य सम्पन्न वैद्य अश्विभ्याम्=विद्या-सम्पन्न स्त्री पुरुषों के सुत्राम्णे=रोगादि दुःखों से रक्षा करने के लिए तीव्र स्वभाव वाली, रोगी को समूल नष्ट करने वाली सोमलतादि ओषधियों के गुणों को जान कर स्वादिष्ठ और मधुर ओषधों को सिद्ध किया करें ॥ १९ । १ ॥ ●

भारद्वाजः । **सोमः**=**ओषधिसारम्** । स्वराडनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

मनुष्यों को धर्म, अर्थ, काम, मोक्ष की सिद्धि के लिए क्या करना चाहिए,
यह फिर उपदेश किया है ॥

**परीतो षिञ्चता सुतꣳ सोमो य ऽ उत्तमꣳ हविः ।**
**दधन्वान् यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥ २ ॥**

**पदार्थः**—(**परि**) सर्वतः (**इतः**) प्राप्तः (**सिञ्चत**) अत्राऽन्येषामपीति दीर्घः । (**सुतम्**) निष्पन्नम् (**सोमः**) प्रेरको विद्वान् (**यः**) (**उत्तमम्**) (**हविः**) अत्तुमर्हम् (**दधन्वान्**) धरन् सन् (**यः**) (**नर्यः**) नरेषु साधुः (**अप्सु**) जलेषु (**अन्तः**) मध्ये (**आ**) (**सुषाव**) निष्पादयेत् (**सोमम्**) ओषधिसारम् (**अद्रिभिः**) मेघैः ॥ २ ॥

**प्रमाणार्थ**—(**सिञ्चत**) यहाँ 'अन्येषामपि दृश्यते' (६ । ३ । १३७) से मन्त्र में दीर्घ है ॥

**अन्वयः**—हे मनुष्याः ! य उत्तमं हविः सोम इतः स्याद्यो नर्यो दधन्वानप्स्वन्तरासुषाव तमद्रिभिः सुतं सोमं यूयं परिसिञ्चत ॥ २ ॥

**सपदार्थान्वयः**—हे **मनुष्याः ! य उत्तमं हविः** अत्तुमर्हं **सोमः** प्रेरको विद्वान् **इतः** प्राप्तः **स्याद् यो नर्यः** नरेषु साधुः **दधन्वान्** धरन् सन् **अप्सु** जलेषु **अन्तः** मध्ये **आसुषाव** निष्पादयेत्, **तमद्रिभिः** मेघैः **सुतं** निष्पन्नं **सोमम्** ओषधिसारं **यूयं परि+सिञ्चत** (सर्वतः सिञ्चत) ॥

**भाषार्थ**—हे मनुष्यो ! जो (उत्तमम्) उत्तम (हविः) भोज्य पदार्थ को (सोमः) शुभ कर्मों में प्रेरणा करने वाला विद्वान् (इतः) प्राप्त होवे, जो (नर्यः) नरों में श्रेष्ठ विद्वान् (अप्सु) जलों के (अन्तः) मध्य में ओषधियों को (दधन्वान्) रख कर (आसुषाव) आसव को सिद्ध करे उस (अद्रिभिः) मेघों से (सुतम्) निष्पन्न (सोमम्) ओषधियों के सार को तुम (परि+सिञ्चत) सब ओर सींचो ॥ १६ । २ ॥

[हे मनुष्याः ! य उत्तमं हविः सोमः···अप्स्वन्तरासुषाव, तं···सोमं यूयं परि+सिञ्चत]

**भावार्थः**—मनुष्यैरुत्तमा ओषधीर्जले संस्थाप्य मथित्वा ऽऽसवं निस्सार्यनिन यथायोग्यं जाठराग्निं सेवित्वा बलारोग्ये वर्द्धनीये ॥ १६ । २ ॥

**भावार्थ**—मनुष्य उत्तम ओषधियों को जल में स्थापित करके, उनका मन्थन कर, आसव निकाल कर इससे यथायोग्य जाठराग्नि की सेवा करके बल और आरोग्य को बढ़ावें ॥ १६ । २ ॥

**भा० पदार्थः**—हविः=ओषधीः । आसुषाव=आसवं निस्सारयेत् ।

**भाष्यसार**—**ओषधियों का सेवन कैसे करें**—सोम=ओषधि-विज्ञान के वेत्ता श्रेष्ठ वैद्य जल में ओषधियों का मन्थन करके सोमम्=ओषधियों के सारभूत आसव को सिद्ध करें । उस आसव का सेवन करके सब मनुष्य स्वास्थ्य प्राप्त करें ॥ १६ । २ ॥

आभूतिः । **सोमः=ओषधिः** । भुरिक् त्रिष्टुप् । धैवतः ॥

**पुनस्तमेव विषयमाह** ॥

मनुष्यों को धर्म, अर्थ, काम, मोक्ष की सिद्धि के लिए क्या करना चाहिए, यह फिर उपदेश किया है ॥

**वायोः पूतः पवित्रेण प्रत्यङ् सोमो ऽ अतिद्रुतः । इन्द्रस्य युज्यः सखा ।**
**वायोः पूतः पवित्रेण प्राङ् सोमो ऽ अतिद्रुतः । इन्द्रस्य युज्यः सखा ॥ ३ ॥**

**पदार्थः**—(**वायोः**) पवनात् (**पूतः**) शुद्धः (**पवित्रेण**) शुद्धिकरेण (**प्रत्यङ्**) यः प्रत्यक्षमञ्चति=प्राप्नोति सः (**सोमः**) सोमलताद्योषधिगणः (**अतिद्रुतः**) योऽतिद्रवति सः (**इन्द्रस्य**) इन्द्रियस्वामिनो जीवस्य (**युज्यः**) युक्तः (**सखा**) मित्रमिव (**वायोः**) शुद्धाच्छुद्धिनिमित्तात् (**पूतः**) निर्मलः (**पवित्रेण**) शुद्धिकरेण कर्मणा (**प्राङ्**) प्रकृष्टतयाऽञ्चति सः (**सोमः**) निष्पादितौषधिरसः (**अतिद्रुतः**) अत्यन्तं शीघ्रकारी (**इन्द्रस्य**) परमैश्वर्ययुक्तस्य राज्ञः (**युज्यः**) समाधातुमर्हः (**सखा**) सुहृदिव ॥ १६ । ३ ॥

**अन्वयः**—हे मनुष्याः ! यः सोमः प्राङतिद्रुतो वायोः पवित्रेण पूत इन्द्रस्य युज्यः सखेवास्ति यश्च सोमः प्रत्यङ्ङतिद्रुतो वायोः पवित्रेण पूत इन्द्रस्य युज्यः सखेवास्ति तं यूयं सततं सेवध्वम् ॥ १६।३ ॥

**सपदार्थान्वयः**—हे **मनुष्याः! यः सोमः** सोमलताद्योषधिगणः **प्राङ्** प्रकृष्टतयाऽञ्चति **सः अतिद्रुतः** योऽतिद्रवति सः **वायोः** पवनात् **पवित्रेण** शुद्धिकरेण **पूतः** शुद्धः **इन्द्रस्य** इन्द्रियस्वामिनो जीवस्य **युज्यः** युक्तः **सखा** मित्रम् **इवास्ति, यश्च सोमः** निष्पादितौषधिरसः **प्रत्यङ्** यः प्रत्यक्षमञ्चति=प्राप्नोति सः **अतिद्रुतः** अत्यन्तं शीघ्रकारी **वायोः** शुद्धाच्छुद्धिनिमित्तात् **पवित्रेण** शुद्धिकरेण कर्मणा **पूतः** निर्मलः **इन्द्रस्य** परमैश्वर्ययुक्तस्य राज्ञः **युज्यः** समाधातुमर्हः **सखा** सुहृद् **इवास्ति, तं यूयं सततं सेवध्वम्** ॥ १९ । ३ ॥

**भाषार्थ**—हे मनुष्यो ! जो (सोमः) सोमलता आदि ओषधि-गण—(प्राङ्) प्रकृष्ट गति वाला, (अतिद्रुतः) अत्यन्त द्रवशील, (वायोः) वायु के (पवित्रेण) पवित्र होने से (पूतः) शुद्ध, (इन्द्रस्य) इन्द्रियों के स्वामी जीव का (युज्यः) युक्त=उचित (सखा) मित्र के समान है, और जो—(सोमः) निष्पादित तैयार किया हुआ ओषधियों का रस (प्रत्यङ्) प्रत्यक्ष प्राप्त होने वाला, (अतिद्रुतः) अत्यन्त शीघ्रकारी, (वायोः) शुद्धि के निमित्त वायु के (पवित्रेण) शुद्धिकारक यज्ञ कर्म से (पूतः) निर्मल, (इन्द्रस्य) परम ऐश्वर्य से युक्त राजा का (युज्यः) युक्त (सखा) मित्र के समान है, उसका तुम सदा सेवन करो ॥ १९ । ३ ॥

**[हे मनुष्याः ! यः सोमः प्राङ्/प्रत्यङ् अतिद्रुतो ··· वायोः पवित्रेण पूत इन्द्रस्य युज्यः सखेवास्ति]**

**भावार्थः**—या ओषधयः शुद्धे स्थले जले वायौ चोत्पद्यन्ते पूर्वापरान् रोगान् शीघ्रं निस्सारयन्ति च ता मनुष्यैर्मित्रवत् सदा सेवनीयाः ॥ १९ । ३ ॥

**भावार्थ**—जो ओषधियाँ शुद्ध स्थल, जल और वायु में उत्पन्न होती हैं, जो पूर्व-अपर रोगों को शीघ्र निकाल देती हैं उनका मनुष्य मित्र के तुल्य सदा सेवन करें ॥ १९ । ३ ॥

**भाष्यसार—कैसी ओषधियाँ शीघ्र गुणकारी होती हैं ?**—जो ओषधियाँ शुद्ध स्थल में शुद्ध जल और वायु से पवित्र होती हैं और जो वायु को शुद्ध करने वाले यज्ञकर्म से पवित्र होती हैं, वे शीघ्र लाभ करने वाली और इन्द्रस्य=जीवों के लिए मित्र की तरह उपकारक होती हैं ॥ १९ । ३ ॥

आभूतिः । **सोमः=ओषधिः** । आर्षी गायत्री । षड्जः ॥

**पुनस्तमेव विषयमाह**

मनुष्यों को धर्म, अर्थ, काम, मोक्ष की सिद्धि के लिए क्या करना चाहिए,
यह फिर उपदेश किया है ॥

**पुनाति॑ ते परि॒स्रुत॒ꣳ सोम॒ꣳ सूर्य॑स्य दु॒हि॒ता । वारे॑ण॒ शश्व॑ता॒ तना॑ ॥ ४ ॥**

**पदार्थः**—(**पुनाति**) पवित्रीकरोति (**ते**) तव (**परिस्रुतम्**) सर्वतः प्राप्तम् (**सोमम्**) ओषधिरसम् (**सूर्य्यस्य**) (**दुहिता**) पुत्रीवोषा (**वारेण**) वरणीयेन (**शश्वता**) सनातनेन गुणेन (**तना**) विस्तृतेन प्रकाशेन ॥ ४ ॥

**अन्वयः**—हे मनुष्य ! या तना सूर्यस्य दुहितेवोषा शश्वता वारेण ते परिस्रुतं सोमं पुनाति तस्यां त्वमोषधिरसं सेवस्व ॥ ४ ॥

**सपदार्थान्वयः**—हे **मनुष्य ! या तना** विस्तृतेन प्रकाशेन **सूर्य्यस्य दुहिता=इवोषा** पुत्रीवोषा **शश्वता** सनातनेन गुणेन **वारेण**

**भाषार्थ**—हे मनुष्य ! जो (तना) विस्तृत प्रकाश से (सूर्यस्य) सूर्य की (दुहिता) पुत्री के तुल्य उषा (शश्वता) सनातन (वारेण) वरण

वरणीयेन **ते** तव **परिस्रुतं** सर्वतः प्राप्तं **सोमम्** ओषधिरसं **पुनाति** पवित्रीकरोति, **तस्यां त्वमोषधिरसं सेवस्व** ॥ १९ । ४ ॥

करने योग्य गुण से (ते) तेरे (परिस्रुतम्) सब ओर से प्राप्त (सोमम्) ओषधि-रस को (पुनाति) पवित्र करती है, उस उषा-काल में तू ओषधि-रस का सेवन कर ॥ १९ । ४ ॥

**[ हे मनुष्य ! या···सूर्यस्य दुहितेवोषा···सोमं पुनाति, तस्यां त्वमोषधिरसं सेवस्व ]**

**भावार्थः**—ये मनुष्याः सूर्योदयात् प्राक् शौचं विधाय यथानुकूलमौषधं सेवन्ते, तेऽरोगा भूत्वा सुखिनो जायन्ते ॥ १९ । ४ ॥

**भावार्थ**—जो मनुष्य सूर्योदय से पूर्व शौच=शुद्धि करके यथानुकूल औषध का सेवन करते हैं वे नीरोग रहकर सुखी होते हैं ॥ १९।४॥

**भाष्यसार**—**औषध सेवन का समय**—सूर्योदय से पूर्व, जब सूर्य की पुत्री की तरह उषा का आगमन-समय हो, उस समय औषध-सेवन से शरीरादि की रोगों की निवृत्ति होने से पवित्रता होती है। इस समय में औषध-सेवन से वरण करने योग्य गुणों की प्राप्ति होती है ॥ १९ । ४ ॥

आभूतिः । **सोमः**=**ओषधिः** । निचृज्जगती । निषादः ॥

**पुनस्तमेव विषयमाह** ॥

फिर उसी विषय को अगले मन्त्र में कहा है ॥

**ब्रह्म क्षत्रं पवते तेज ऽ इन्द्रियꣳ सुरया सोमः सुत ऽ आसुतो मदाय ।**
**शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ॥ ५ ॥**

**पदार्थः**—(**ब्रह्म**) विद्वत्कुलम् (**क्षत्रम्**) न्यायकारिक्षत्रियकुलम् (**पवते**) पवित्रीकरोति (**तेजः**) प्रागल्भ्यम् (**इन्द्रियम्**) मनआदिकम् (**सुरया**) या सूयते सा सुरा तया (**सोमः**) ओषधिरसः (**सुतः**) संपादितः (**आसुतः**) समन्ताद्रोगनिवारणे सेवितः (**मदाय**) हर्षाय (**शुक्रेण**) आशु शुद्धिकरेण (**देव**) सुखप्रदातः (**देवताः**) देवा एव देवतास्ताः (**पिपृग्धि**) प्रीणीहि (**रसेन**) (**अन्नम्**) भोज्यम् (**यजमानाय**) सुखप्रदात्रे (**धेहि**) धर ॥ ५ ॥

**अन्वयः**—हे देव विद्वन् ! यः शुक्रेण मदाय सुरया सुत आसुतः सोमस्तेज इन्द्रियं ब्रह्म क्षत्रं च पवते तेन रसेनान्नं यजमानाय धेहि देवताः पिपृग्धि ॥ ५ ॥

**सपदार्थान्वयः**—हे देव !=विद्वन् ! सुखप्रदातः ! **यः शुक्रेण** आशु शुद्धिकरेण **मदाय** हर्षाय **सुरया** या सूयते सा सुरा तया **सुतः** सम्पादितः **आसुतः** समन्ताद्रोगनिवारणे सेवितः **सोमः** ओषधिरसः **तेजः** प्रागल्भ्यम् **इन्द्रियं** मनआदिकं **ब्रह्म** विद्वत्कुलं **क्षत्रं** न्यायकारिक्षत्रियकुलं **च पवते** पवित्रीकरोति, **तेन रसेनान्नं** भोज्यं **यजमानाय** सुखप्रदात्रे **धेहि** धर, **देवताः** देवा एव देवतास्ताः **पिपृग्धि** प्रीणीहि ॥ १९ । ५ ॥

**भाषार्थ**—हे (देव) सुखों के दाता विद्वान् ! जो—(शुक्रेण) शीघ्र शुद्धि करने वाले यज्ञ से (मदाय) हर्ष-प्राप्ति के लिए (सुरया) सुरा के द्वारा (सुतः) सम्पादित किया हुआ, (आसुतः) सब ओर से रोग-निवारण में सेवन किया हुआ (सोमः) ओषधि-रस (तेजः) तेज को (इन्द्रियम्) मन आदि इन्द्रियों को (ब्रह्म) विद्वानों के कुल को, और (क्षत्रम्) न्यायकारी क्षत्रिय-कुल को (पवते) पवित्र करता है, उस रस से (अन्नम्) भोजन को (यजमानाय) सुखदाता यजमान के लिए (धेहि)

धारण कर, (देवताः) देवताओं=विद्वानों को (पिपृग्धि) तृप्त कर ॥ १९ । ५ ॥

[हे देव=विद्वन् ! यः'''सोमस्तेज इन्द्रियं ब्रह्म क्षत्रं च पवते तेन रसेनान्नं यजमानाय धेहि]

**भावार्थः**—नात्र केनचिन्मनुष्येण नीरसमन्नमत्तव्यम्, सदा विद्या-शौर्य-बल-बुद्धिवर्द्धनाय महौषधिसारास्सेवनीयाः ॥ १९ । ५ ॥

**भावार्थ**—मनुष्यों को चाहिए कि नीरस अन्न का सेवन न करें अपितु सदा विद्या, शौर्य, बल व बुद्धि-वर्द्धक औषधियों के सार का ही सेवन करें।

**भा० पदार्थः**—सोमः=महौषधिसारः । तेजः=शौर्यम् । इन्द्रियम्=बुद्धिः । ब्रह्म=विद्या । क्षत्रम्=बलम् ॥

**भाष्यसार**—**ओषधियों के रस से लाभ**—विद्वान् वैद्यों के उपदेशानुसार स्वास्थ्य लाभ के लिए शुद्धि करने वाले, सिद्ध किए गए ओषधियों के आसव के सेवन से तेज, ब्रह्म-शक्ति, क्षत्र-बल की प्राप्ति और इन्द्रियों की शुद्धि होती है ॥ १९ । ५ ॥ ●

आभूतिः । **इन्द्रः**=राजपुरुषः । विराट् प्रकृतिः । धैवतः ॥

**राजपुरुषैः किं कर्त्तव्यमित्याह ॥**

राजपुरुषों को क्या करना चाहिए, इस विषय का उपदेश किया है ॥

**कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमऽउक्तिं यजन्ति। उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे। एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥ ६ ॥**

**पदार्थः**—(कुवित्) बलम् । कुविदिति बलना० ॥ निघं० ३ । १ ॥ (**अङ्ग**) मित्र (**यवमन्तः**) बहवो यवा विद्यन्ते येषां ते (**यवम्**) यवादिधान्यम् (**चित्**) अपि (**यथा**) (**दान्ति**) छिन्दन्ति (**अनुपूर्वम्**) अनुकूलं प्रथमम् (**वियूय**) विभज्य (**इहेह**) अस्मिन् संसारे व्यवहारे च (**एषाम्**) कृषीवलानाम् (**कृणुहि**) कुरु (**भोजनानि**) पालनाभ्यवहरणानि वा (**ये**) (**बर्हिषः**) अन्नादिप्रापकाः (**नमउक्तिम्**) नमसामन्नादीनामुक्तिं=वृद्धय उपदेशम् (**यजन्ति**) ददति (**उपयामगृहीतः**) कर्षकादिभिः स्वीकृतः (**असि**) (**अश्विभ्याम्**) द्यावापृथिवीभ्याम् (**त्वा**) त्वाम् (**सरस्वत्यै**) कृषिकर्मप्रचारकायै वाचे (**त्वा**) (**इन्द्राय**) शत्रुविदारणाय (**त्वा**) (**सुत्राम्णे**) सुष्ठुरक्षित्रे (**एषः**) (**ते**) तव (**योनिः**) कारणम् (**तेजसे**) प्रागल्भ्याय (**त्वा**) (**वीर्याय**) पराक्रमाय (**त्वा**) (**बलाय**) (**त्वा**) ॥ १९ । ६ ॥

**प्रमाणार्थ**—(**कुवित्**) 'कुवित्' यह पद निघं० ३ । १ में बल-नामों में पठित है ॥

**अन्वयः**—हे अङ्ग ! ये बर्हिषो यवमन्तः कृषीवला नमउक्तिं यजन्त्येषां पदार्थानामिहेह त्वं भोजनानि कृणुहि यथैते यवं चिद्वियूयानुपूर्वं दान्ति तथा त्वमेषां विभावेन कुवित् प्रापय यस्य ते तवैष योनिरस्ति तं त्वाऽश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय सुत्राम्णे त्वा तेजसे त्वा वीर्याय त्वा बलाय ये यजन्ति यैर्वा त्वमुपयामगृहीतोऽसि तैस्त्वं विहर ॥ १९ । ६ ॥

**सपदार्थान्वयः**—हे **अङ्ग** ! मित्र ! **ये बर्हिषः** अन्नादिप्रापकाः **यवमन्तः**=कृषीवला बहवो यवा विद्यन्ते येषां ते **नमउक्तिं** नमसामन्नादी-

**भाषार्थ**—हे (**अङ्ग**) मित्र ! जो (**बर्हिषः**) अन्न आदि के प्राप्त कराने वाले (**यवमन्तः**) बहुत यव=जौ वाले किसान लोग (**नम उक्तिम्**) नमः=

नामुक्तिः=वृद्धय उपदेशं **यजन्ति** ददति, **एषां**=**पदार्थानां** कृषीवलानाम् **इहेह** अस्मिन् संसारे व्यवहारे च **त्वं भोजनानि** पालनाभ्यवहरणानि वा **कृणुहि** कुरु ।

अन्न आदि की उक्ति=वृद्धि के लिए उपदेश (यजन्ति) देते हैं (एषाम्) इनके पदार्थों एवं किसानों के—(इहेह) इस संसार में और व्यवहार में तू (भोजनानि) पालन वा खान-पानों को (कृणुहि) सिद्ध कर ।

**यथैते यवं** यवादिधान्यं **चिद्** अपि **वियूय** विभज्य **अनुपूर्वम्** अनुकूलं प्रथमं **दान्ति** छिन्दन्ति, **तथा त्वमेषां विभावेन कुवित्** बलं प्रापय ।

जैसे ये—(यवम्) जौ आदि धान्य को (चिद्) भी (वियूय) विभक्त करके (अनुपूर्वम्) अनुकूलता से प्रथम (दान्ति) छेदन करते हैं वैसे तू इनके धन से (कुवित्) बल को प्राप्त करा ।

**यस्य ते**=**तवैष योनिः** कारणम् **अस्ति, तं त्वा** त्वाम् **अश्विभ्यां** द्यावापृथिवीभ्यां **त्वा** त्वां **सरस्वत्यै** कृषिकर्मप्रचारकायै वाचे **त्वा** त्वाम् **इन्द्राय** शत्रुविदारणाय **सुत्राम्णे** सुष्ठुरक्षित्रे **त्वा** त्वां **तेजसे** प्रागल्भ्याय **त्वा** त्वां **वीर्याय** पराक्रमाय **त्वा** त्वां **बलाय ये यजन्ति** ददति, **यैर्वा त्वमुपयामगृहीतः** कर्षकादिभिः स्वीकृतः **असि, तैस्त्वं विहर** ।। १९।६।।

(ते) तेरा (एषः) यह (योनिः) कारण है, सो (त्वा) तुझे (अश्विभ्याम्) द्युलोक और पृथिवी के लिए, (त्वा) तुझे (सरस्वत्यै) कृषि-कर्म की प्रचारक वाणी के लिए, (त्वा) तुझे (इन्द्राय) शत्रुओं के विदारण के लिए तथा (सुत्राम्णे) उत्तम रक्षक के लिए, (त्वा) तुझे (तेजसे) तेज के लिए, (त्वा) तुझे (वीर्याय) पराक्रम के लिए, (त्वा) तुझे (बलाय) बल के लिए जो (यजन्ति) दान करते हैं, अथवा जिन कृषक आदि के तू (उपयामगृहीतः) स्वीकार किया गया (असि) है उनके साथ तू विहार कर ।। १९ । ६ ।।

**[ये···यवमन्त नमउक्ति यजन्ति]**

**भावार्थः**—अत्रोपमालङ्कारः ।। ये राजपुरुषाः कृष्यादिकर्मकर्तॄन्, राज्ये करदातॄन्, परिश्रमिणो जनाँश्च प्रीत्या रक्षन्त्युपदिशन्ति तेऽस्मिन् संसारे सौभाग्यवन्तो भवन्ति ।। १९ । ६ ।।

**भावार्थ**—इस मन्त्र में उपमा अलङ्कार है ।। जो राजपुरुष कृषि आदि कर्म करने वाले, राज्य में कर देने वाले, परिश्रमी लोगों की प्रीतिपूर्वक रक्षा करते हैं, और उन्हें उपदेश देते हैं वे इस संसार में सौभाग्यशाली होते हैं ।। १९ । ६ ।।

**भा० पदार्थः**—यवमन्तः=कृष्यादिकर्मकर्तारः, राज्ये करदातारः, परिश्रमिणो जनाः ।

**भाष्यसार**—**१. राज-धर्म**—जो यवादि अन्नों को पैदा करके बढ़ाते हैं, उन कृषकों का सब प्रकार से पालन तथा प्रोत्साहनादि से सम्वर्धन करना राजा का मुख्य धर्म है । अन्नादि पदार्थों के बढ़ने से उत्तम रक्षा, ऐश्वर्य, पराक्रम तथा तेज की वृद्धि होती है ।

**२. अलंकार**—इस मन्त्र में उपमा अलङ्कार है । जैसे कृषक अन्नादि पदार्थों से सब की रक्षा करते हैं, वैसे ही राजादि भी कृषकों की रक्षा, तथा उनको कृषि-कर्म के लिए जलादि से सदा सहायता किया करें ।। १९ । ६ ।।

आभूतिः । **सोमः**=महौषधिगणः । विराड् जगती । निषादः ॥

**राजप्रजे कथं स्यातामित्युपदिश्यते ॥**

राजा और प्रजा कैसे हों, इस विषय का उपदेश किया जाता है ॥

**नाना हि वां देवहितꣳ सदस्कृतं मा सꣳसृक्षाथां परमे व्योमन् ।**
**सुरा त्वमसि शुष्मिणी सोम ऽ एष मा मा हिꣳसीः स्वां योनिमाविशन्ती ॥ ७ ॥**

**पदार्थः**—(**नाना**) अनेकप्रकारेण (**हि**) किल (**वाम्**) युवाभ्याम् (**देवहितम्**) देवेभ्यः प्रियम् (**सदः**) स्थानम् (**कृतम्**) (**मा**) (**सं, सृक्षाथाम्**) संसर्गं कुरुतम् (**परमे**) उत्कृष्टे (**व्योमन्**) व्योम्नि=बुद्ध्यवकाशे (**सुरा**) सोमवल्ल्यादिलता । अत्र षुञ् अभिषवे इत्यस्माद्धातोरौणादिको रः प्रत्ययः ॥ (**त्वम्**) सा (**असि**) अस्ति (**शुष्मिणी**) बहु शुष्म=बलं यस्यामस्ति सा (**सोमः**) महौषधिगणः (**एषः**) (**मा**) माम् (**मा**) (**हिंसीः**) हिंस्याः (**स्वाम्**) स्वकीयाम् (**योनिम्**) कारणम् (**आविशन्ती**) समन्तात् प्रविशन्ती ॥ ७ ॥

**प्रमाणार्थ**—(सुरा) यहाँ 'षुञ् अभिषवे' इस धातु से औणादिक 'र' प्रत्यय है ॥

**अन्वयः**—हे राजप्रजाजनौ ! नाना सदस्कृतं देवहितं वां प्राप्नोतु या हि स्वां योनिमाविशन्ती शुष्मिणी सुरास्ति त्वं परमे व्योमन् वर्तमानाऽसि तां युवां प्राप्नुतम् । मादकद्रव्याणि मा संसृक्षाथाम् । विद्वन् एष सोमोऽस्ति तं मा च त्वं मा हिंसीः ॥ ७ ॥

**सपदार्थान्वयः**—हे राजप्रजाजनौ ! **नाना** अनेकप्रकारेण **सदः** स्थानं **कृतं देवहितं** देवेभ्यः प्रियं **वां** युवाभ्यां **प्राप्नोतु** ।

**या हि** किल **स्वां** स्वकीयां **योनिं** कारणम् **आविशन्ती** समन्तात् प्रविशन्ती **शुष्मिणी** बहु शुष्म=बलं यस्यामस्ति सा **सुरा** सोमवल्ल्यादिलता **अस्ति, त्वं** सा **परमे** उत्कृष्टे **व्योमन्** व्योम्नि=बुद्ध्यवकाशे **वर्तमानाऽसि** अस्ति, **तां युवां प्राप्नुतम् । मादकद्रव्याणि मा संसृक्षाथाम्** संसर्गं कुरुतम् ।

**विद्वन् ! एष सोमः** महौषधिगणः **अस्ति, तं मा मां च त्वं मा हिंसीः** हिंस्याः ॥ १९ । ७ ॥

**भाषार्थ**—हे राजपुरुष और प्रजा-जनो ! (नाना) अनेक प्रकार से (सदः) स्थान (कृतम्) बनाया हुआ (देवहितम्) जो देवों को प्रिय है वह (वाम्) तुम्हें प्राप्त हो ।

जो (हि) निश्चय ही (स्वाम्) अपने (योनिम्) कारण में (आविशन्ती) आविष्ट होती हुई (शुष्मिणी) बहुत शुष्म=बल देने वाली (सुरा) सोमवल्ली आदि लता है । (त्वम्) वह (परमे) उत्कृष्ट (व्योमन्) बुद्धि-अवकाश में विद्यमान (असि) है, उसे तुम प्राप्त करो । मादक-द्रव्यों का संसर्ग मत करो ।

हे विद्वान् ! (एषः) यह (सोमः) महौषधियों का गण है उसे और (माम्) मुझे तू (मा हिंस्याः) नष्ट मत कर ॥ १९ । ७ ॥

[हे राजप्रजाजनौ !···या शुष्मिणी सुराऽस्ति···तां युवां प्राप्नुतम्, मादकद्रव्याणि मा संसृक्षाथाम्]

**भावार्थः**—ये राजप्रजास्थमनुष्या बुद्धिबलारोग्यायुर्वर्द्धकानोषधिरसान् सततं सेवन्ते, प्रमादकरांश्च, त्यजन्ति तेऽत्र परत्र च धर्मार्थकाममोक्षसाधका भवन्ति ॥ १९ । ७ ॥

**भावार्थ**—जो राजपुरुष और प्रजा-जन बुद्धि, बल, आरोग्य और आयु के वर्द्धक ओषधिरसों का सदा सेवन करते हैं और प्रमादक द्रव्यों का त्याग करते हैं वे इस लोक और परलोक में

धर्म, अर्थ, काम और मोक्ष को सिद्ध करने वाले होते हैं ॥ १९ । ७ ॥

**भा० पदार्थः**—शुष्मिणी=बुद्धिबलारोग्यायुर्वर्द्धिका । सुरा=ओषधिरसः ।

**भाष्यसार**—**कैसी ओषधियां सेवनीय हैं ?**—जो ओषधियाँ देवहितम्=विद्वानों को प्रिय तथा दिव्य गुणों को प्राप्त कराने वाली हों, शुष्मिणी=रोगनिवारक होने से शरीरस्थ धातुओं का पोषण करती हों, व्योमन्=बुद्धि को बढ़ाने वाली हों, वे सोम-लता आदि श्रेष्ठ ओषधियाँ सदा सेवनीय हैं और जो नशादि दुर्गुणों को प्राप्त करावें, उनका सदा परित्याग करना चाहिए ॥ १९ । ७ ॥

आभूतिः । **सोमः=सूर्यवत्तेजस्वी विद्वान्** । पङ्क्तिः । पञ्चमः ॥

**पुनर्मनुष्यैः किं कर्त्तव्यमित्युपदिश्यते ॥**

फिर मनुष्यों को क्या करना चाहिए, इस विषय का उपदेश किया है ॥

**उपयामगृहीतोऽस्याश्विनं तेजः सारस्वतं वीर्यमैन्द्रं बलम् ।**
**एष ते योनिर्मोदाय त्वानन्दाय त्वा महसे त्वा ॥ ८ ॥**

**पदार्थः**—(**उपयामगृहीतः**) उपगतैर्धर्म्यैर्यामैर्यमसम्बन्धिभिर्नियमैर्गृहीतः संयुतः (**असि**) (**आश्विनम्**) अश्विनोः=सूर्याचन्द्रमसोरिदम् (**तेजः**) प्रकाशः (**सारस्वतम्**) सरस्वत्या=वेदवाण्या इदम् (**वीर्यम्**) पराक्रमः (**ऐन्द्रम्**) इन्द्रस्य=विद्युत इदम् (**बलम्**) (**एषः**) (**ते**) तव (**योनिः**) गृहम् (**मोदाय**) हर्षाय (**त्वा**) त्वाम् (**आनन्दाय**) परमसुखाय (**त्वा**) (**महसे**) महते सत्काराय (**त्वा**) ॥ ८ ॥

**अन्वयः**—हे राजप्रजाजन ! यस्त्वमुपयामगृहीतोऽसि यस्य ते एष योनिरस्ति तस्य त आश्विनमिव तेजः सारस्वतं वीर्यमैन्द्रमिव बलञ्चास्तु तं त्वा मोदाय त्वानन्दाय त्वा महसे च सर्वे स्वीकुर्वन्तु ॥ ८ ॥

**सपदार्थान्वयः**—हे राजप्रजाजन ! **यस्त्वमुपयामगृहीतः** उपगतैर्धर्म्यैर्यामैर्यमसम्बन्धिभिर्नियमैर्गृहीतः संयुतः **असि, यस्य ते** तव **एषः योनिः** गृहम् **अस्ति, तस्य ते** तव **आश्विनम्** अश्विनोः=सूर्याचन्द्रमसोरिदम् **इव तेजः** प्रकाशः **सारस्वतं** सरस्वत्या=वेदवाण्या इदं **वीर्यं** पराक्रमः **ऐन्द्रम्** इन्द्रस्य=विद्युत इदम् **इव बलञ्चास्तु, तं त्वा** त्वां **मोदाय** हर्षाय **त्वा** त्वाम् **आनन्दाय** परमसुखाय **त्वा** त्वां **महसे** महते सत्काराय **च सर्वे स्वीकुर्वन्तु** ॥ १९ । ८ ॥

**भाषार्थ**—हे राजपुरुष और प्रजा-जन ! जो तू—(उपयामगृहीतः) धर्म-युक्त याम=यम सम्बन्धी नियमों से संयुक्त (असि) है, जो (ते) तेरा (एषः) यह (योनिः) घर है, सो (ते) तेरा (आश्विनम्) सूर्य और चन्द्रमा के समान (तेजः) प्रकाश, (सारस्वतम्) वेदवाणी के समान (वीर्यम्) पराक्रम, (ऐन्द्रम्) और इन्द्र=विद्युत् के समान (बलम्) बल हो, सो (त्वा) तुझे (मोदाय) हर्ष के लिए, (त्वा) तुझे (आनन्दाय) परम सुख के लिए और (त्वा) तुझे (महसे) महान् सत्कार के लिए सब स्वीकार करें ॥ १९ । ८ ॥

[हे राजप्रजाजन !···ते अश्विनमिव तेजः, सारस्वतं वीर्यम्, ऐन्द्रमिव बलं चास्तु]

**भावार्थः**—ये मनुष्याः सूर्यचन्द्रवत्तेजस्विनो, विद्यापराक्रमा, विद्युद्बलिष्ठा भूत्वा—

**भावार्थ**—जो मनुष्य सूर्य और चन्द्र के समान तेजस्वी, विद्या के तुल्य पराक्रमी, विद्युत् के समान बलिष्ठ होकर—

[तं त्वां मोदाय, आनन्दाय, महसे च सर्वे स्वीकुर्वन्तु]

स्वयमानन्दिनोऽन्येभ्यो ह्यानन्दं प्रददति, तेऽत्र परमानन्दभोगिनो भवन्ति ॥ १९ । ८ ॥

स्वयं आनन्दी होकर अन्यों को आनन्द प्रदान करते हैं वे यहाँ परमानन्द का भोग करने वाले होते हैं ॥ १९ । ८ ॥

**भाष्यसार**—तेजस्वी विद्वान् का कर्त्तव्य—आश्विनम्=सूर्य और चन्द्र के समान तेजस्वी, सबको प्रसन्न करने वाला, विद्यादि गुणों से सम्पन्न, वेद-ज्ञान से प्रकाशमान और विद्युत् के समान स्फूर्ति से कार्य करने में कुशल विद्वान् पुरुष सबसे अधिक पूजनीय होता है। और वह स्वयं यमनियमों के अनुसार चलता हुआ दूसरों को भी धर्मयुक्त कार्यों में प्रेरित किया करे ॥ १९ । ८ ॥

आभूतिः । **सोमः**=शुभगुणकरो राजा । शक्वरी । धैवतः ॥

**पुनस्तमेव विषयमाह ॥**

फिर उसी विषय को अगले मन्त्र में कहा है ॥

**तेजोऽसि तेजो मयि धेहि वीर्यमसि वीर्यं मयि धेहि बलमसि बलं मयि धेह्योजोऽस्योजो मयि धेहि मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि ॥ ९ ॥**

**पदार्थः**—(तेजः) प्रागल्भ्यम् (असि) अस्ति । अत्र सर्वत्र पुरुषव्यत्ययः (तेजः) (मयि) (धेहि) (वीर्यम्) सर्वाङ्गस्फूर्तिः (असि) (वीर्यम्) (मयि) (धेहि) (बलम्) सर्वाङ्गदृढत्वम् (असि) (बलम्) (मयि) (धेहि) (ओजः) महाप्राणवत्वम् (असि) (ओजः) (मयि) (धेहि) (मन्युः) क्रोधः (असि) (मन्युम्) (मयि) (धेहि) (सहः) सहनम् (असि) (सहः) (मयि) (धेहि) ॥ १९ । ९ ॥

**प्रमाणार्थ**—(असि) अस्ति । यहाँ सर्वत्र पुरुष-व्यत्यय है ॥

**अन्वयः**—हे शुभगुणकर राजन् ! यत्त्वयि तेजोस्यस्ति तत्तेजो मयि धेहि यत्त्वयि वीर्यमसि तद्वीर्यं मयि धेहि यत्त्वयि बलमसि तद्बलं मयि धेहि यत्त्वय्योजोऽसि तदोजो मयि धेहि यस्त्वयि मन्युरसि तम्मन्युं मयि धेहि यस्त्वयि संहोसि तत्सहो मयि धेहि ॥ १९ । ९ ॥

**सपदार्थान्वयः**—हे शुभगुणकर राजन् ! यत्त्वयि तेजः प्रागल्भ्यम् असि=अस्ति, तत्तेजः प्रागल्भ्यं मयि धेहि ।

**यत्त्वयि वीर्यं** सर्वाङ्गस्फूर्तिः **असि** अस्ति **तद्वीर्यं** सर्वाङ्गस्फूर्तिः **मयि धेहि** ।

**यत्त्वयि बलं** सर्वाङ्गदृढत्वम् **असि** अस्ति **तद्बलं** सर्वाङ्गदृढत्वं **मयि धेहि** ।

**यत्त्वय्योजः** महाप्राणवत्त्वम् **असि** अस्ति **तदोजः** महाप्राणवत्त्वं **मयि धेहि** ।

**भाषार्थ**—हे शुभगुणों को उत्पन्न करने वाले राजन् ! जो तुझ में (तेजः) तेज (असि) है उस (तेजः) तेज को (मयि) मुझ में (धेहि) धारण कर ।

जो (त्वयि) तुझ में (वीर्यम्) सब अङ्गों में स्फूर्ति (असि) है उस (वीर्यम्) स्फूर्ति को (मयि) मुझ में (धेहि) धारण कर ।

जो (त्वयि) तुझ में (बलम्) सब अङ्गों की दृढ़ता (असि) है वह (बलम्) सब अङ्गों की दृढ़ता को (मयि) मुझ में (धेहि) धारण कर ।

जो (त्वयि) तुझ में (ओजः) महाप्राणवत्ता (असि) है वह (ओजः) महाप्राणवत्ता (मयि) मुझ में (धेहि) धारण कर ।

**यस्त्वयि मन्युः** क्रोधः **असि** अस्ति **तम्मन्युं** क्रोधं **मयि धेहि ।**

जो (त्वयि) तुझ में (मन्युः) क्रोध (असि) है उस (मन्युम्) क्रोध को (मयि) मुझ में (धेहि) धारण कर।

**यस्त्वयि सहः** सहनम् **असि** अस्ति **तत्सहः** सहनं **मयि धेहि** ॥ १९ । ९ ॥

जो (त्वयि) तुझ में (सहः) सहनशक्ति (असि) है उसे (सहः) सहनशक्ति को (मयि) मुझ में (धेहि) धारण कर ॥ १९ । ९ ॥

[हे शुभगुणकर राजन् !···यस्त्वयि मन्युरसि=अस्ति तम्मन्युं मयि धेहि]

**भावार्थः**—सर्वान् मनुष्यान् प्रतीयमीश्वरस्याज्ञाऽस्ति—यान् शुभगुणकर्मस्वभावान् विद्वांसो धरेयुस्तानन्येष्वपि धारयेयुः ।

**भावार्थ**—सब मनुष्यों के लिए ईश्वर की यह आज्ञा है—जिन शुभ गुण, कर्म, स्वभावों को विद्वान् लोग धारण करें उन्हें अन्यों में भी धारण करावें।

यथा—दुष्टाचाराणामुपरि क्रोधं कुर्युस्तथा धार्मिकेषु प्रीतिं सततं कुर्युः ॥ १९ । ९ ॥

जैसे—दुष्टाचारियों पर क्रोध करें वैसे धार्मिकों पर सदा प्रीति करें ॥ १९ । ९ ॥

**अन्यत्र व्याख्यात**—(क) आप प्रकाश स्वरूप हैं कृपा कर मुझ में भी प्रकाश स्थापन कीजिये। आप अनन्त पराक्रम युक्त हैं इसलिये मुझ में भी कृपा कटाक्ष से पूर्ण पराक्रम धरिये। आप अनन्त-बल युक्त हैं इसलिये मुझ में भी बल धारण कीजिये। आप अनन्त सामर्थ्य युक्त हैं मुझको भी पूर्ण सामर्थ्य दीजिये। आप दुष्ट काम और दुष्टों पर क्रोधकारी हैं मुझ को भी वैसा ही कीजिए। आप निन्दा, स्तुति और स्व-अपराधियों को सहन करने वाले हैं कृपा से मुझको भी वैसा ही कीजिए। **(सत्यार्थ० सप्तमसमुल्लास)** ॥

(ख) **(तेजोऽसि०)** अर्थात् हे परमेश्वर ! आप प्रकाशरूप हैं मेरे हृदय में भी कृपा से विज्ञान रूप प्रकाश कीजिये **(वीर्यमसि०)** हे जगदीश्वर ! आप अनन्त पराक्रम वाले हैं मुझ को भी पूर्ण पराक्रम दीजिये **(बलमसि)** हे अनन्त बल वाले महेश्वर ! आप अपने अनुग्रह से मुझ को भी शरीर और आत्मा में पूर्ण बल दीजिये। **(ओजो०)** हे सर्वशक्तिमान् ! आप सब सामर्थ्य के निवास-स्थान हैं अपनी करुणा से यथोचित सामर्थ्य का निवास-स्थान मुझको भी कीजिये **(मन्युरसि०)** हे दुष्टों पर क्रोध करने हारे ! आप दुष्ट कामों और दुष्ट जीवों पर क्रोध करने का स्वभाव मुझ में भी रखिये। **(सहोऽसि०)** हे सब के सहन करने हारे ईश्वर ! आप जैसे पृथिवी आदि लोकों के धारण और नास्तिकों के दुष्ट व्यवहारों को सहते हैं वैसे ही सुख-दुःख, हानि-लाभ, सरदी-गरमी, भूख-प्यास और युद्ध आदि का सहने वाला मुझको भी कीजिये अर्थात् सब शुभ गुण मुझ को देके अशुभ गुणों से सदा अलग रखिये ॥ **ऋग्वेदादि० प्रार्थनायाचनासमर्पणविषयः** ॥

(ग) हे स्वप्रकाश ! अनन्त-तेज ! आप अविद्यान्धकार से रहित हो, किञ्च सत्य विज्ञान तेजःस्वरूप हो। आप कृपा-दृष्टि से मुझ में वही तेज धारण करो; जिससे मैं निस्तेज, दीन और भीरु कहीं कभी न होऊँ। हे अनन्तवीर्य परमात्मन् ! आप वीर्यस्वरूप हो; आप सर्वोत्तम बल मुझ में भी स्थिर रखें। हे अनन्तपराक्रम ! आप ओजः=पराक्रमस्वरूप हो; सो मुझ में भी उस पराक्रम को सदैव धारण करो। हे दुष्टानामुपरि क्रोधकृत् ! मुझ में भी दुष्टों पर क्रोध धारण कराओ। हे अनन्त-सहनस्वरूप ! मुझ में भी आप सहन-सामर्थ्य धारण करो, अर्थात् शरीर, इन्द्रिय, मन और आत्मा इनके तेजादि गुण कभी

मुझ में से दूर न हों। जिससे मैं आपकी भक्ति का स्थिर अनुष्ठान करूँ और आपके अनुग्रह से संसार में भी सदा सुखी रहूँ ॥ **आर्याभिविनय** २ । ६ ॥

**भाष्यसार**—राजा कैसा हो ?—जो परम तेजस्वी है, जिसके अङ्गों में स्फूर्ति है, जिसके सब शरीर के अवयव हृष्ट-पुष्ट हैं, जो प्राणशक्ति से सम्पन्न है और जो अन्याय करने वाले और शत्रुओं के प्रति क्रोध करने वाला हो, वह राजा होने योग्य है। राजा भी इन गुणों को दूसरे मनुष्यों में धारण करावे ॥ १९ । ९ ॥

हैमवर्चिः । **सोमः=राजा** । आर्ष्युष्णिक् । धैवतः ॥

**पुनः स्त्रीपुरुषौ कथं वर्त्तेयातामित्याह ॥**

फिर स्त्री पुरुष कैसे वर्त्तें, इस विषय का उपदेश किया है ॥

**या व्या॒घ्रं विषू॑चिको॒भौ वृकं॑ च॒ रक्ष॑ति । श्ये॒नं प॑त॒त्रिण॑ᳬ सि॒ᳬहᳬ सेमं पा॒त्वᳬह॑सः ॥ १० ॥**

**पदार्थः**—(या) विदुषी स्त्री (**व्याघ्रम्**) यो विशेषेणाजिघ्रति तम् (**विषूचिका**) या विविधानर्थान् सूचयति सा (**उभौ**) (**वृकम्**) अजादीनां हन्तारम् (**च**) (**रक्षति**) (**श्येनम्**) यः शीघ्रं धावित्वान्यान् पक्षिणो हन्ति तम् (**पतत्रिणम्**) पतत्रः=शीघ्रं गन्तुं बहुवेगो यस्यास्ति तम् (**सिंहम्**) यो हस्त्यादीनपि हिनस्ति तम् (**सा**) (**इमम्**) (**पातु**) रक्षतु (**अंहसः**) मिथ्याचारात् ॥ १० ॥

**अन्वयः**—या विषूचिका व्याघ्रं वृकमुभौ पतत्रिणं श्येनं सिंहं च हत्वा प्रजां रक्षति सेमं राजानमंहसः पातु ॥ १० ॥

**सपदार्थान्वयः**—या विदुषी स्त्री **विषूचिका** या विविधानर्थान् सूचयति सा **व्याघ्रं** यो विशेषेणाजिघ्रति तं **वृकम्** अजादीनां हन्तारम् **उभौ, पतत्रिणं** पतत्रः=शीघ्रं गन्तुं बहुवेगो यस्यास्ति तं **श्येनं** यः शीघ्रं धावित्वान्यान् पक्षिणो हन्ति तं **सिंहं** यो हस्त्यादीनपि हिनस्ति तं **च हत्वा प्रजां रक्षति, सेमं=राजानमंहसः** मिथ्याचारात् **पातु** रक्षतु ॥ १९ । १० ॥

**भाषार्थ**—(या) जो (विषूचिका) विविध अर्थों को सूचित करने वाली विदुषी स्त्री है वह—(व्याघ्रम्) विशेष घ्राणशक्ति वाले बाघ को, (वृकम्) अजा=बकरी आदि के घातक भेड़ियों (उभौ) इन दोनों को, (पतत्रिणम्) शीघ्र गति करने वाले पक्षी को, (श्येनम्) शीघ्र दौड़ कर अन्य पक्षियों को मारने वाले बाज को और (सिंहम्) हस्ती आदि के घातक सिंह को मारकर प्रजा की रक्षा करती है, वह रानी (इमम्) इस राजा को (अंहसः) मिथ्याचरण से (पातु) बचावे ॥ १९ । १० ॥

**[या ··· व्याघ्रं वृकं ··· पतत्रिणं श्येनं सिंहं च हत्वा प्रजां रक्षति, सेमं राजानमंहसः पातु]**

**भावार्थः**—यथा शूरवीरो राजा स्वयं व्याघ्रादिकं हन्तुं, न्यायेन प्रजा रक्षितुं स्वस्त्रियं प्रसादयितुं च शक्नोति तथैव राज्ञी भवेत्।

**भावार्थ**—जैसे शूरवीर राजा स्वयं व्याघ्र आदि को मारने, न्याय से प्रजा की रक्षा करने और स्व-स्त्री को प्रसन्न करने में समर्थ होता है वैसी ही रानी होवे।

यथा सुप्रियाचारेण राज्ञी स्वपतिं प्रमादात्

जैसे—उत्तम प्रियाचरण से रानी स्व-पति को

पृथक्कृत्य प्रसादयति, तथैव राजाऽपि तां सदा प्रसादयेत् ॥ १९ । १० ॥

प्रमाद से पृथक् करके प्रसन्न करती है वैसे ही राजा भी उसे सदा प्रसन्न करे ॥ १९ । १० ॥

**भाष्यसार**—**राज-प्रजा धर्म**—राजा का यह परम-धर्म है कि व्याघ्रादि हिंसक प्राणियों का वध करके प्रजा की सर्वथा रक्षा किया करे। प्रजा का धर्म यह है कि वह राजा को मिथ्याचरण से बचावे ॥ १९ । १० ॥

हैमवर्चिः । **अग्निः**=**विद्वान्** । शक्वरी । धैवतः ॥

**सन्तानैः पितृभ्यां सह कथं वर्त्तितव्यमित्याह ॥**

सन्तानों को अपने माता पिता के साथ कैसे वर्तना चाहिए, यह उपदेश किया है ॥

**यदापिपेष मातरं पुत्रः प्रमुदितो धयन् । एतत्तदग्ने ऽ अनृणो भवाम्यहतौ पितरौ मया । सम्पृच स्थ सं मा भद्रेण पृङ्क्त विपृच स्थ वि मा पाप्मना पृङ्क्त ॥ ११ ॥**

**पदार्थः**—(**यत्**) यः (**आपिपेष**) समन्तात् पिनष्टि (**मातरम्**) जननीम् (**पुत्रः**) (**प्रमुदितः**) प्रकृष्टत्वेन हर्षितः (**धयन्**) दुग्धं पिबन् (**एतत्**) वर्त्तमानं सुखम् (तत्) (**अग्ने**) विद्वन् (**अनृणः**) अविद्यमानम् ऋणं यस्य सः (**भवामि**) (**अहतौ**) न हतौ=हिंसितौ (**पितरौ**) माता पिता च द्वौ (**मया**) अपत्येन (**संपृचः**) ये सम्पृचन्ति ते (**स्थ**) भवत (**सम्**) (**मा**) माम् (**भद्रेण**) भजनीयेन व्यवहारेण (**पृङ्क्त**) बध्नीत (**विपृचः**) ये वियुञ्जते वियुक्ता भवन्ति ते (**स्थ**) (**वि**) (**मा**) (**पाप्मना**) पापेन (**पृङ्क्त**) संसर्गं कुरुत ॥ ११ ॥

**अन्वयः**—हे अग्ने विद्वन् ! यद्यः प्रमुदितः पुत्रो दुग्धं धयन् मातरमापिपेष तेन पुत्रेणानृणो भवामि यतो मे पितरावहतौ मया भद्रेण सह वर्त्तमानौ च स्याताम् । हे मनुष्याः ! यूयं संपृचः स्थ मा भद्रेण सम्पृङ्क्त पाप्मना विपृचः स्थ माप्येतेन विपृङ्क्त तदेतत् सुखं प्रापयत ॥ ११ ॥

**सपदार्थान्वयः**—हे **अग्ने** !=**विद्वन्** ! **यद्**=**यः प्रमुदितः** प्रकृष्टत्वेन हर्षितः **पुत्रो दुग्धं धयन्** पिबन् **मातरं** जननीम् **आपिपेष** समन्तात् पिनष्टि, **तेन पुत्रेणानृणः** अविद्यमानम् ऋणं यस्य सः **भवामि, यतो मे पितरौ** माता पिता च द्वौ **अहतौ** न हतौ=हिंसितौ **मया** अपत्येन **भद्रेण** भजनीयेन व्यवहारेण **सह वर्त्तमानौ च स्याताम्** ।

**हे मनुष्याः** ! **यूयं सम्पृचः** ये सम्पृचन्ति ते **स्थ** भवत, **मा** मां **भद्रेण** भजनीयेन व्यवहारेण **सम्पृङ्क्त** संबध्नीत । **पाप्मना** पापेन **विपृचः** ये वियुञ्जते वियुक्ता भवन्ति ते **स्थ** भवत, **मा माम् अप्येतेन वि+पृङ्क्त** विरुद्धं संसर्गं कुरुत **तदेतत्**=**सुखं** वर्त्तमानं सुखं **प्रापयत** ॥ १९ । ११ ॥

**भावार्थ**—हे (अग्ने) विद्वान् ! (यत्) जो (प्रमुदितः) अति हर्षित पुत्र (धयन्) दूध पीता हुआ (मातरम्) जननी को (आपिपेष) सब ओर से पीसता है उस पुत्र से (अनृणः) अनृण (भवामि) होता हूँ। जिससे मेरे (पितरौ) माता और पिता दोनों (अहतौ) अहिंसित होकर (मया) मुझ सन्तान से (भद्रेण) भद्र व्यवहारपूर्वक वर्ताव करने वाले हों।

हे मनुष्यो ! तुम—(सम्पृचः) धर्म से संयुक्त (स्थ) हो, (मा) मुझे (भद्रेण) भद्र व्यवहार से (सम्पृङ्क्त) सम्बद्ध करो। तुम—(पाप्मना) पाप से (विपृचः) वियुक्त हो (मा) मुझे भी इससे (विपृङ्क्त) वियुक्त करो और (तत्) उस (एतत्) इस वर्तमान सुख को प्राप्त कराओ ॥ १९ । ११ ॥

[ हे अग्ने=विद्वन् ! यद्=यः ··· पुत्रो दुग्धं धयन् मातरमापिपेव तेन पुत्रेणानृणो भवामि ]

**भावार्थः**—यथा मातापितरौ पुत्रं पालयतस्तथा पुत्रेण मातापितरौ सेवनीयौ, सर्वैरत्रेदं ध्येयं वयं मातापितरौ सेवित्वा पितृऋणान्मुक्ता भवेमेति ।

**भावार्थ**—जैसे माता-पिता पुत्र को पालते हैं वैसे पुत्र माता-पिता की सेवा करे । सबको यहाँ यह ध्यान रखना चाहिए कि हम माता-पिता की सेवा करके पितृऋण से मुक्त होवें ।

[ यूयं ··· मा भद्रेण सम्पृङ्क्त, पाप्मना विपृचः स्थ मा अप्येतेन विपृङ्क्त ]

यथा विद्वांसौ धार्मिकौ पितरौ स्वापत्यानि पापाचरणाद् वियोज्य धर्माचरणे प्रवर्त्तयेतां, तथा सन्ताना अपि पितॄनेवं वर्त्तयेरन् ॥ १९ । ११ ॥

जैसे विद्वान् धार्मिक माता-पिता अपने सन्तानों को पापाचरण से पृथक् करके धर्माचरण में प्रवृत्त करते हैं वैसे—सन्तान भी माता-पिता के साथ इसी प्रकार वर्त्ताव करें ॥ १९ । ११ ॥

**भा० पदार्थः**—अनृणः=ऋणान्मुक्तः । भद्रेण=धर्माचरणेन ॥

**भाष्यसार**—**विद्वान् मनुष्य का कर्त्तव्य**—अनृणः=पितृ-ऋण से मुक्त होने के लिए यह अत्यावश्यक है कि विद्वान् मनुष्य माता-पिता की श्रद्धा से सेवा करे । उनके साथ सदा भद्र-व्यवहार करके उनको सर्वथा प्रसन्न रखे । जिससे माता-पिता किसी भी प्रकार से दुःखानुभव न करें ।

ऐसा ही माता-पिता भी अपनी सन्तान को भद्र धर्माचरण में प्रवृत्त करावें और पापाचरण से पृथक् रक्खें ॥ १९ । ११ ॥

हैमवर्चिः । **विद्वांसः=स्पष्टम्** । भुरिगनुष्टुप् । गान्धारः ॥

**मातापित्रपत्यानि परस्परं कथं वर्त्तेरन्नित्याह ॥**

माता पिता और सन्तान परस्पर कैसे वर्तें, यह उपदेश किया है ॥

**दे॒वा य॒ज्ञम॑तन्वत भेष॒जं भि॒षजा॒श्विना॑ । वा॒चा सर॑स्वती भि॒षगिन्द्रा॑येन्द्रि॒याणि॒ दध॑तः ॥ १२ ॥**

**पदार्थः**—(**देवाः**) विद्वांसः (**यज्ञम्**) सुखप्रदम् (**अतन्वत**) विस्तृतं कुरुत (**भेषजम्**) रोगप्रणाशकमोषधरूपम् (**भिषजा**) आयुर्वेदविदौ (**अश्विना**) आयुर्वेदांगव्यापिनौ (**वाचा**) तदानुकूल्यया वाण्या (**सरस्वती**)सरः=प्रशस्त आयुर्वेदबोधो विद्यते यस्याः सा (**भिषक्**) चिकित्साद्यङ्गवित् (**इन्द्राय**) परमैश्वर्याय (**इन्द्रियाणि**) चक्षुरादीनि धनानि वा (**दधतः**) ॥ १२ ॥

**अन्वयः**—हे मनुष्याः ! यथेन्द्रियाणि दधतो भिषक् सरस्वती भिषजाऽश्विना च देवा वाचेन्द्राय भेषजं यज्ञमतन्वत तथैव यूयं कुरुत ॥ १२ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! **यथेन्द्रियाणि** चक्षुरादीनि धनानि वा **दधतो भिषक्** चिकित्साद्यङ्गवित् **सरस्वती** सरः=प्रशस्त आयुर्वेदबोधो विद्यते यस्याः सा **भिषजा** आयुर्वेदविदौ **अश्विना** आयुर्वेदाङ्गव्यापिनौ **च देवाः** विद्वांसः **वाचा** तदानुकूल्यया वाण्या **इन्द्राय** परमैश्वर्याय **भेषजं** रोगप्रणाशकमौषधरूपं **यज्ञं** सुख-

**भाषार्थ**—हे मनुष्यो ! जैसे—(इन्द्रियाणि) चक्षु आदि इन्द्रियों वा धनों को (दधतः) धारण करने वाला (भिषक्) चिकित्सा आदि अङ्गों का वेत्ता वैद्य, (सरस्वती) आयुर्वेद का प्रशस्त बोध रखने वाली स्त्री, (भिषजा) आयुर्वेद के वेत्ता दो पुरुष और (अश्विना) आयुर्वेद के अङ्गों में व्यापक दो व्यक्ति तथा (देवाः) विद्वान् लोग

प्रदम् **अतन्वत** विस्तृतं कुरुत, **तथैव यूयं कुरुत** ॥ १९ । १२ ॥

(वाचा) आयुर्वेदानुकूल वाणी से (इन्द्राय) परम ऐश्वर्य के लिए (भेषजम्) रोगनाशक औषध रूप (यज्ञम्) सुखप्रद यज्ञ को (अतन्वत) विस्तृत करते हैं वैसे ही तुम करो ॥ १९ । १२ ॥

[हे मनुष्याः ! यथा···देवा वाचा इन्द्राय भेषजं यज्ञमतन्वत, तथैव यूयं कुरुत]

**भावार्थः**—यावन्मनुष्याः पथ्यौषधिब्रह्मचर्यसेवनेन शरीरारोग्यबलबुद्धीर्न वर्द्धयन्ते, तावत् सर्वाणि सुखानि प्राप्तुं नं शक्नुवन्ति ॥ १९ । १२ ॥

**भावार्थ**—जब तक मनुष्य पथ्य, ओषधि, और ब्रह्मचर्य के सेवन से शरीर, आरोग्य, बल और बुद्धि को नहीं बढ़ाते हैं तब तक सब सुखों को प्राप्त नहीं कर सकते ॥ १९ । १२ ॥

**भा० पदार्थः**—भेषजम्=पथ्यौषधिब्रह्मचर्यसेवनम् । इन्द्राय=शरीरारोग्यबलबुद्धिवर्द्धनाय । यज्ञम्=सर्वं सुखम् ॥

**भाष्यसार**—**विद्वान् मनुष्यों का कर्त्तव्य**—भिषजा देवाः=आयुर्वेद विद्या के ज्ञाता विद्वान् स्त्री-पुरुषों का यह कर्त्तव्य है कि वे इन्द्रियादियुक्त शरीर को रोगमुक्त करने वाली भेषजम्=ओषधियों के ज्ञान रूप सुखप्रद यज्ञ का सदा विस्तार किया करें और दूसरों को भी इस विद्या का उपदेश किया करें ॥ १९ । १२ ॥

हैमवर्चिः । **यज्ञः=स्पष्टम्** । अनुष्टुप् । गान्धारः ॥

**कीदृशा जनाः सुखिनो भवन्तीत्याह ॥**

कैसे मनुष्य सुखी होते हैं, इस विषय का उपदेश किया है ॥

**दी॒क्षायै॑ रू॒पꣳ शष्पा॑णि प्राय॒णीय॑स्य॒ तोक्मा॑नि ।**

**क्र॒यस्य॑ रू॒पꣳ सोम॑स्य ला॒जाः सो॑मा॒ꣳशवो॒ मधु॑ ॥ १३ ॥**

**पदार्थः**—**(दीक्षायै)** यज्ञसाधननियमपालनाय **(रूपम्)** **(शष्पाणि)** आहत्य संशोध्य ग्राह्याणि धान्यानि **(प्रायणीयस्य)** प्रकृष्टं सुखं यन्ति येन व्यवहारेण तत्र भवस्य **(तोक्मानि)** अपत्यानि । तोक्मेत्यपत्यना० ॥ निघं० २ । २ ॥ **(क्रयस्य)** द्रव्यविक्रयस्य **(रूपम्)** **(सोमस्य)** ओषधीरसस्य **(लाजाः)** प्रफुल्लिता व्रीहयः **(सोमांशवः)** सोमस्यांशाः **(मधु)** क्षौद्रम् ॥ १३ ॥

**प्रमाणार्थ**—**(तोक्मानि)** अपत्यानि । 'तोक्म' पद निघं० २ । २ में अपत्य **(सन्तान)** नामों में पठित है ॥

**अन्वयः**—हे मनुष्याः ! यानि प्रायणीयस्य दीक्षायै रूपं तोक्मानि क्रयस्य रूपं शष्पाणि सोमस्य लाजाः सोमांशवो मधु च सन्ति तानि यूयमतन्वत ॥ १३ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! यानि **प्रायणीयस्य** प्रकृष्टं सुखं यन्ति येन व्यवहारेण तत्र भवस्य **दीक्षायै** यज्ञसाधननियमपालनाय **रूपं** **तोक्मानि** अपत्यानि **क्रयस्य** द्रव्यविक्रयस्य **रूपं** **शष्पाणि** आहत्य=संशोध्य ग्राह्याणि धान्यानि

**भाषार्थ**—हे मनुष्यो !—जो (प्रायणीयस्य) उत्तम सुख को प्राप्त कराने वाले व्यवहार में विद्यमान पुरुष का (दीक्षायै) यज्ञ के साधन एवं नियमों के पालन के लिए (रूपम्) रूप है, (तोक्मानि) सन्तान हैं, (क्रयस्य) द्रव्य बेचने का

सोमस्य ओषधीरसस्य **लाजाः** प्रफुल्लिताः व्रीहयः **सोमांशवः** सोमस्यांशाः **मधु** क्षौद्रं **च सन्ति, तानि यूयमतन्वत** ॥ १९ । १३ ॥

(रूपम्) रूप है, (शष्पाणि) शुद्ध करके ग्रहण करने योग्य धान्य हैं, (सोमस्य) ओषधियों के रस से युक्त (लाजाः) फूले हुए चावल=खीलें हैं, (सोमांशवः) सोम के अंश और (मधु) मधु=शहद है उन्हें तुम (अतन्वत) विस्तृत करो=बढ़ाओ ॥ १९ । १३ ॥

**[ अनुवृत्तिमाह— ]**

**भावार्थः**—अत्रातन्वतेति क्रियापदं पूर्वमन्त्रादनुवर्त्तते ।

**भावार्थ**—यहां 'अतन्वत' इस पद की पूर्व मन्त्र से अनुवृत्ति है ।

**[ हे मनुष्याः ! यानि ··· तोक्मानि, शष्पाणि, लाजाः, सोमांशवो मधु च सन्ति तानि यूयमतन्वत ]**

ये मनुष्या यज्ञाऽर्हाण्यपत्यानि वस्तूनि च सम्पादयन्ति, तेऽत्र सुखं लभन्ते ॥ १९ । १३ ॥

जो मनुष्य यज्ञ के योग्य सन्तान और वस्तुओं को सिद्ध करते हैं वे यहाँ सुख को प्राप्त होते हैं ॥ १३ ॥

**भा० पदार्थः**—तोक्मानि=यज्ञार्हाण्यपत्यानि ।

**भाष्यसार—विद्वान् यजनीय वस्तुओं का ही विस्तार करें**—विद्वान् मनुष्य उत्तम सुख प्राप्त करने के लिए दीक्षा=यज्ञ के नियमों तथा यज्ञ के घृत मधु आदि साधनों को बढ़ावें। यज्ञ के साधन सर्वथा शुद्ध किए हुए और ओषधियों के रस से परिपूत होने चाहिए ॥ १९ । १३ ॥

हैमवर्चिः । **आतिथ्यादयो लिङ्गोक्ताः=स्पष्टम्** । अनुष्टुप् । गान्धारः ॥

**कीदृशा जना यशस्विनो भवन्तीत्याह ॥**

कैसे लोग यशस्वी होते हैं, यह उपदेश किया है ॥

**आतिथ्यरूपं मासरं महावीरस्य नग्नहुः । रूपमुपसदामेतत्तिस्रो रात्रीः सुरासुता ॥ १४ ॥**

**पदार्थः**—(**आतिथ्यरूपम्**) अतिथीनां भावः कर्म्म वाऽऽतिथ्यं तद्रूपं च तत् (**मासरम्**) येनाऽतिथयो मासेषु रमन्ते तत् (**महावीरस्य**) महांश्चासौ वीरश्च तस्य (**नग्नहुः**) यो नग्नान् जुहोत्यादत्ते (**रूपम्**) सुरूपकरणम् (**उपसदाम्**) य उपसीदन्ति तेषामतिथीनाम् (**एतत्**) (**तिस्रः**) (**रात्रीः**) (**सुरा**) सोमरसः (**आसुता**) समन्तान्निष्पादिता ॥ १९ । १४ ॥

**अन्वयः**—हे मनुष्याः ! यानि मासरमातिथ्यरूपं महावीरस्य नग्नहू रूपमुपसदां तिस्रो रात्रीर्निवासनमेतद्रूपं सुता सुराऽऽसुता च सन्ति तानि यूयं गृह्णीत ॥ १९ । १४ ॥

**सपदार्थान्वयः—हे मनुष्याः ! यानि मासरं** येनाऽतिथयो मासेषु रमन्ते तत् **आतिथ्यरूपम्** अतिथीनां भावः कर्म्म वाऽऽतिथ्यं तद्रूपं च तत् **महावीरस्य** महांश्चासौ वीरश्च तस्य **नग्नहुः** यो नग्नान् जुहोत्यादत्ते **रूपं** सुरूपकरणम्, **उपसदां** य उपसीदन्ति तेषामतिथीनां **तिस्रो रात्रीर्निवासनमेतद्रूपं, सुता, सुरा** सोमरसः **आसुता** समन्तान्नि-

**भाषार्थ**—हे मनुष्यो ! जो—(मासरम्) जिससे अतिथि लोग मासों में रमण करते हैं वह (आतिथ्यरूपम्) अतिथि सत्कार रूप व्यवहार, (महावीरस्य) महान् वीर पुरुष का (नग्नहुः) नंगों को वस्त्र आदि देकर (रूपम्) सुरूप बनाना, (उपसदाम्) अतिथि जनों का (तिस्रः) तीन (रात्रीः) रात निवास करना, और निचोड़ा हुआ (सुरा)

ष्पादिता **च सन्ति; तानि यूयं गृह्णीत** ॥१६ । १४॥ सोम-रस (आसुता) तैयार है, उन्हें तुम ग्रहण करो ॥ १६ । १४ ॥

[ आतिथ्यरूपम् ]

**भावार्थः**—ये मनुष्या धार्मिकाणां विदुषामतिथीनां सत्कारसङ्गोपदेशान्,

**भावार्थ**—जो मनुष्य धार्मिक विद्वान् अतिथि जनों का सत्कार, संग और उपदेश, और—

[ महावीरस्य नग्नहू रूपम् ]

वीराणां च मान्यं, दरिद्रेभ्यो वस्त्रादिदानं,

वीर पुरुषों का मान, दरिद्रों को वस्त्र आदि का दान,

[ उपसदां तिस्रो रात्रीर्निवासनमेतद्रूपम् ]

स्वभृत्यानामुत्तमं निवासदानं,

अपने भृत्यों=सेवकों को उत्तम निवास, और—

[ सुराऽऽसुता च ]

सोमरससिद्धिं च सततं कुर्वन्ति ते यशस्विनो जायन्ते ॥ १६ । १४ ॥

सोम-रस की सिद्धि सदा करते हैं वे यशस्वी होते हैं ॥ १६ । १४ ॥

**भाष्यसार**—**आतिथ्य करने से यश की प्राप्ति**—जो विद्वान् मनुष्य मासरम्=मासादि कालों में परोपकारार्थ भ्रमण करते रहते हैं, जो महावीर हैं और जो वस्त्रादि से हीन दरिद्र हैं, उनके अचानक घर पर आ जाने पर कम से कम तीन रात तक सोमरसादि पदार्थों से यथायोग्य सत्कार किया करें। ऐसा करने से उत्तम यशादि की प्राप्ति होती है ॥ १६ । १४ ॥

हैमवर्चिः । **सोमः**=ओषधिः । अनुष्टुप् । गान्धारः ॥

कुमारीभिः किं कर्त्तव्यमित्याह ॥

कुमारी कन्याओं को क्या करना चाहिए, इस विषय का उपदेश किया है ॥

**सोम॑स्य रू॒पं क्री॒तस्य॑ परि॒स्रुत्परि॑षिच्यते ।**
**अ॒श्विभ्यां॑ दु॒ग्धं भे॑ष॒जमिन्द्रा॑यै॒न्द्रꣳ सर॑स्वत्या ॥ १५ ॥**

**पदार्थः**—(**सोमस्य**) सोमलताद्योषधिसमूहस्य (**रूपम्**) उत्तमस्वरूपम् (**क्रीतस्य**) गृहीतस्य (**परिस्रुत्**) यः परितः=सर्वतः स्रवति=प्राप्नोति स रसः (**परि**) सर्वतः (**सिच्यते**) (**अश्विभ्याम्**) वैद्यकविद्याव्यापिभ्यां विद्वद्भ्याम् (**दुग्धम्**) गवादिभ्यः पयः (**भेषजम्**) सर्वौषधम् (**इन्द्राय**) ऐश्वर्येच्छुकाय (**ऐन्द्रम्**) इन्द्रो=विद्युद्देवता यस्य तद् विज्ञानम् (**सरस्वत्या**) प्रशस्तविद्याविज्ञानयुवतया पत्न्या ॥ १५ ॥

**अन्वयः**—हे स्त्रियो ! यथा सरस्वत्या विदुष्या क्रीतस्य सोमस्य परिस्रुद्रूपमश्विभ्यां दुग्धं भेषजमिन्द्रायैन्द्रं परिषिच्यते तथा यूयमप्याचरत ॥ १५ ॥

**सपदार्थान्वयः**—हे स्त्रियः ! यथा सरस्वत्या=विदुष्या प्रशस्तविद्याविज्ञानयुक्तया

**भाषार्थ**—हे स्त्रियो ! जैसे—(सरस्वत्या) प्रशस्त विद्या और विज्ञान से युक्त विदुषी पत्नी के

पत्न्या **क्रीतस्य** गृहीतस्य **सोमस्य** सोमलताद्योषधिसमूहस्य **परिस्रुत्** यः परितः=सर्वतः स्रवति=प्राप्नोति स रसः **रूपम्** उत्तमस्वरूपम् **अश्विभ्यां** वैद्यकविद्याव्यापिभ्यां विद्वद्भ्यां **दुग्धं** गवादिभ्यः पयः **भेषजं** सर्वौषधम् **इन्द्राय** ऐश्वर्येच्छुकाय **ऐन्द्रम्** इन्द्रो=विद्युद्देवता यस्य तद् विज्ञानं, **परिषिच्यते** तथा यूयमप्याचरत ॥ १९ । १५ ॥

द्वारा (क्रीतस्य) ग्रहण किए हुए (सोमस्य) सोमलता आदि ओषधियों को (परिस्रुत्) सब ओर से स्रवित होने वाला रसात्मक (रूपम्) उत्तम स्वरूप, (अश्विभ्याम्) वैद्यक विद्या में व्याप्त दो विद्वानों के द्वारा (दुग्धम्) गौ आदि से दुहा हुआ दूध रूप (भेषजम्) सब का औषध तथा (इन्द्राय) ऐश्वर्य के इच्छुक पुरुष के लिए (ऐन्द्रम्) इन्द्र=विद्युत् देवता वाला विज्ञान (परि+षिच्यते) सब सींचा जाता है, वैसा तुम भी आचरण करो ॥ १९ । १५ ॥

**[हे स्त्रियः ! यथा सरस्वत्या=विदुष्या क्रीतस्य सोमस्य परिस्रुद् रूपम्, अश्विभ्यां दुग्धं भेषजम्, इन्द्रायैन्द्रं परिषिच्यते, तथा यूयमप्याचरत]**

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः। सर्वाभिः कुमारीभिर्ब्रह्मचर्येण व्याकरणधर्मविद्यायुर्वेदादीनधीत्य, स्वयंवरं विवाहं कृत्वा, प्रशस्तान्यौषधान्यौऽषधवदन्नव्यञ्जनानि च परिपच्य, सुरसैः संयोज्य, पत्यादीन् संभोज्य, स्वयं च भुक्त्वा, बलारोग्योन्नतिः सततं कार्या ॥ १९ । १५ ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ॥ सब कुमारियाँ ब्रह्मचर्य पूर्वक व्याकरण, धर्म, विद्या, आयुर्वेद आदि को पढ़कर स्वयंवर विवाह करके, उत्तम औषध, औषध के तुल्य अन्न और व्यञ्जनों को पकाकर, उत्तम रसों से संयुक्त करके, पति आदि को खिलाकर और स्वयं खाकर बल और आरोग्य को सदा बढ़ावें ॥ १९ । १५ ॥

**भा० पदार्थः**—सरस्वत्या=ब्रह्मचर्येण अधीतव्याकरणधर्मविद्यायुर्वेदविदुष्या । सोमस्य=प्रशस्तौषधस्य, अन्नव्यञ्जनस्य च । परिस्रुद्=सुरसः ।

**भाष्यसार**—**१. स्वास्थ्य-लाभ के लिए ओषधियों को जानें**—जैसे प्रशस्त वैद्य उत्तम-स्वास्थ्य के लिए सोमलतादि ओषधियों का सेवन कराकर और दूधादि पदार्थों के योग से शरीरों को पुष्ट करता है। इसी प्रकार प्रशस्त विद्या के विद्वान् पुरुष और विदुषी स्त्री ओषधियों तथा दुग्धादि पदार्थों के सेवन से सदा नीरोग रहें ।

**२. अलङ्कार**—इस मन्त्र में इवादि उपमावाचक पद के लुप्त होने से वाचकलुप्तोपमा अलङ्कार है ॥ १९ । १५ ॥

हैमवर्चिः । **यज्ञः**=कार्यम् । भुरिगनुष्टुप् । गान्धारः ॥

**मनुष्येण कथं कार्य्यं साध्यमित्युपदिश्यते ॥**

मनुष्य को कैसे कार्य्य सिद्ध करना चाहिए, इस विषय का उपदेश किया है ॥

**आसन्दी रूपꣳ राजासन्द्यै वेद्यै कुम्भी सुराधानी ।**
**अन्तर ऽ उत्तरवेद्या रूपं कारोतरो भिषक् ॥ १६ ॥**

**पदार्थः**—(**आसन्दी**) समन्तात्सन्यते=सेव्यते या सा । "**सन्**" धातोरौणादिको दप्रत्ययस्ततो ङीष् (**रूपम्**) सुक्रिया (**राजासन्द्यै**) राजानः सीदन्ति यस्यां तस्यै (**वेद्यै**) विदन्ति सुखानि यया तस्यै (**कुम्भी**)

धान्यादिपदार्थाऽऽधारा (**सुराधानी**) सुरा=सोमरसो धीयते यस्यां सा गर्गरी (**अन्तरः**) येनानिति=प्राणिति सः (**उत्तरवेद्याः**) उत्तरा चासौ वेदी च तस्याः (**रूपम्**) (**कारोतरः**) कर्मकारी (**भिषक्**) वैद्यः ॥ १६ ॥

**प्रमाणार्थ**—(आसन्दी) यहाँ 'सन्' धातु से औणादिक द प्रत्यय होकर स्त्रीलिंग में ङीष् प्रत्यय है ।

**अन्वयः**—हे मनुष्याः ! युष्माभिर्यज्ञायासन्दी रूपं राजासन्द्यै वेद्यै कुम्भी सुराधान्युत्तरवेद्या अन्तरो रूपं कारोतरो भिषक् चैतानि संग्राह्याणि ॥ १६ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! **युष्माभिर्यज्ञायासन्दी** समन्तात्सन्यते=सेव्यते या सा **रूपं** सुक्रिया **राजासन्द्यै** राजानः सीदन्ति यस्यां तस्यै **वेद्यै** विदन्ति सुखानि यया तस्यै **कुम्भी** धान्यादि-पदार्थाऽऽधारा **सुराधानी** सुरा=सोमरसो धीयते यस्यां सा गर्गरी **उत्तरवेद्याः** उत्तरा चासौ वेदी च तस्याः **अन्तरः** येनानिति=प्राणिति सः **रूपं** सुक्रिया **कारोतरः** कर्मकारी **भिषक्** वैद्यः **चैतानि सङ्ग्राह्याणि** ॥ १९ । १६ ॥

**भाषार्थ**—हे मनुष्यो ! तुम—यज्ञ के लिए (आसन्दी) सब ओर से सेवन करने योग्य चौकी, (रूपम्) उत्तम क्रिया, (राजासन्द्यै) राजा लोग जिस पर बैठते हैं उस (वेद्यै) सुखद वेदी के लिए (कुम्भी) धान्य आदि पदार्थ रखने का घड़िया, (सुराधानी) सुरा=सोम-रस की सुराही (उत्तर-वेद्याः) उत्तर वेदी का (अन्तरः) प्राणहेतु अन्न, (रूपम्) उत्तम क्रिया, (कारोतरः) कर्मचारी और (भिषक्) वैद्य इन सबका संग्रह करो ॥ १९ । १६ ॥

**[ हे मनुष्याः ! युष्माभिर्यज्ञायासन्दी, भिषक् चैतानि संग्राह्याणि ]**

**भावार्थः**—मनुष्यो यद्यत्कार्यं कर्त्तुमिच्छेत् तस्य सकलसाधनानि सञ्चिनुयात् ॥ १९ । १६ ॥

**भावार्थ**—मनुष्य जो जो कार्य करना चाहे उसके सब साधनों का संचय करे ॥ १९ । १६ ॥

**भाष्यसार**—**यज्ञादि कर्मों के लिए साधनों का संग्रह करें**—सब मनुष्यों का कर्त्तव्य है कि यज्ञादि कार्यों के लिए उत्तम आसन, सुखद वेदी, कुम्भी आदि सोमरसादि के रखने के पात्र और प्राण-प्रद अन्नादि साधनों का संग्रह अवश्य करें ॥ १९ । १६ ॥

हैमवर्चिः । **यज्ञः**=**कार्यम्** । अनुष्टुप् । गान्धारः ॥

**केषां कार्य्याणि सिध्यन्तीत्याह ॥**

किन जनों के कार्य्य सिद्ध होते हैं, यह विषय अगले मन्त्र में कहा है ॥

**वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ।**
**यूपेन यूप ऽ आप्यते प्रणीतो ऽ अग्निरग्निना ॥ १७ ॥**

**पदार्थः**—(**वेद्या**) यज्ञसामग्रया (**वेदिः**) यज्ञभूमिः (**सम्**) सम्यक् (**आप्यते**) प्राप्यते (**बर्हिषा**) महता पुरुषार्थेन (**बर्हिः**) वृद्धम् (**इन्द्रियम्**) धनम् (**यूपेन**) मिश्रितामिश्रितेन व्यवहारेण (**यूपः**) मिश्रितो व्यवहारयत्नोदयः (**आप्यते**) (**प्रणीतः**) प्रकृष्टतया सम्मिलितः (**अग्निः**) पावकः (**अग्निना**) विद्युदादिना ॥ १७ ॥

**अन्वयः**—हे मनुष्याः ! यथा विद्वद्भिर्वेद्या वेदिर्बर्हिषा बर्हिरिन्द्रियं समाप्यते यूपेन यूपोऽग्निना प्रणीतोऽग्निराप्यते तथैव यूयं साधनैः साधनानि संमेल्य सर्वं सुखमाप्नुत ॥ १७ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! यथा विद्वद्भिर्वेद्या यज्ञसामग्रचा वेदिः यज्ञभूमिः **बर्हिषा** महता पुरुषार्थेन **बर्हिः** वृद्धम् **इन्द्रियं** धनं **समाप्यते** सम्यक् प्राप्यते, **यूपेन** मिश्रितामिश्रितेन व्यवहारेण **यूपः** मिश्रितो व्यवहारयत्नोदयः, **अग्निना** विद्युदादिना **प्रणीतः** प्रकृष्टतया सम्मिलितः **अग्निः** पावकः आप्यते तथैव यूयं साधनैः साधनानि संमेल्य सर्वं सुखमाप्नुत ।। १६ । १७ ।।

**भाषार्थ**—हे मनुष्यो ! जैसे—विद्वान् लोग— (वेद्या) यज्ञ की सामग्री से (वेदिः) यज्ञभूमि को, (बर्हिषा) महान् पुरुषार्थ से (बर्हिः) बढ़े हुए (इन्द्रियम्) धन को (समाप्यते) प्राप्त करते हैं, (यूपेन) मिश्रित और अमिश्रित व्यवहार से (यूपः) मिश्रित रूप व्यवहार-यत्न के उदय को, (अग्निना) विद्युत् आदि से (प्रणीतः) अत्यन्त सम्मिलित (अग्निः) अग्नि को प्राप्त करते हैं वैसे तुम साधनों से साधनों को मिला कर सब सुख प्राप्त करो ।। १६ । १७ ।।

[हे मनुष्याः ! यथा विद्वद्भिर्वेद्या वेदिः······समाप्यते······तथैव यूयं साधनैः साधनानि संमेल्य सर्वं सुखमाप्नुत]

**भावार्थः**--अत्र वाचकलुप्तोपमालङ्कारः। ये मनुष्याः साधकतमेन साधनेन साध्यं कार्य्यं साद्धुमिच्छन्ति, त एव सिद्धसाध्या जायन्ते ।।

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ।। जो मनुष्य साधकतम साधन से साध्य कार्य को सिद्ध करना चाहते हैं वे ही साध्य को सिद्ध करने वाले होते हैं ।। १६ । १७ ।।

**भाष्यसार**—**१. यज्ञ ही सब कार्यों का साधक है**—विद्वान् मनुष्य ऐश्वर्य की प्राप्ति के लिए यजनीय पदार्थों से यज्ञादि श्रेष्ठ कार्यों को सदा किया करें, विद्युदादि के यज्ञ=संयोग से सुख के साधनों को बढ़ावें, और अपने श्रेष्ठों के साथ मिश्रित व्यवहार से तथा दुष्टों के साथ अमिश्रित व्यवहार से अपने कार्यों को बढ़ावें ।।

**२. अलङ्कार**—इस मन्त्र में उपमावाचक इवादि पद के लुप्त होने से वाचकलुप्तोपमा अलङ्कार है ।। १६ । १७ ।।

हैमवर्चिः । **गृहपतिः=गृहस्थः** । निचृदनुष्टुप् । गान्धारः ।।

**स्त्रीपुरुषाभ्यां किं कार्य्यमित्याह ।।**

स्त्री पुरुषों को क्या करना चाहिए, इस विषय का उपदेश किया है ।।

**ह॒वि॒र्धान॒ं यद॒श्विनाग्नी॑ध्रं॒ यत्सर॑स्वती । इन्द्रा॑यै॒न्द्रꣳ सद॑स्कृ॒तं पत्नी॒शाल॒ं गार्ह॑पत्यः ।। १८ ।।**

**पदार्थः**—(**हविर्धानम्**) हवींषि=ग्राह्याणि देयानि वा संस्कृतानि वस्तूनि धीयन्ते यस्मिन् (**यत्**) (**अश्विना**) स्त्रीपुरुषौ (**आग्नीध्रम्**) अग्नीध्र=ऋत्विजः शरणम् (**यत्**) (**सरस्वती**) विदुषी स्त्री (**इन्द्राय**) ऐश्वर्यसुखप्रदाय पत्ये (**ऐन्द्रम्**) इन्द्रस्यैश्वर्यस्येदम् (**सदः**) सीदन्ति यस्मिँस्तत् (**कृतम्**) निष्पन्नम् (**पत्नीशालम्**) पत्न्याः शाला पत्नीशालम् (**गार्हपत्यः**) गृहपतिना संयुक्तः ।। १६ । १८ ।।

**अन्वयः**—हे गृहस्थाः स्त्रीपुरुषाः ! यथा विद्वांसावश्विना यद्धविर्धानं कृतवन्तौ यच्च सरस्वती आग्नीध्रं कृतवती इन्द्रायैन्द्रं सदः पत्नीशालं च विद्वद्भिः कृतं तदिदं सर्वं गार्हपत्यो धर्म एवास्ति तथा तत् सर्वं यूयमपि कुरुत ।। १६ । १८ ।।

**सपदार्थान्वयः**—हे गृहस्थाः स्त्रीपुरुषाः ! **यथा विद्वांसावश्विना** स्त्रीपुरुषौ **यद्धविर्धानं** हवींषि=ग्राह्याणि देयानि वा संस्कृतानि वस्तूनि धीयन्ते यस्मिन् **कृतवन्तौ, यच्च सरस्वती** विदुषी स्त्री **आग्नीध्रम्** अग्नीध्र=ऋत्विजः शरणं **कृतवती, इन्द्राय** ऐश्वर्यसुखप्रदाय पत्ये **ऐन्द्रम्** इन्द्रस्यैश्वर्यस्येदं **सदः** सीदन्ति यस्मिँस्तं **पत्नीशालं** पत्न्याः शाला पत्नीशालं **च विद्वद्भिः कृतं** निष्पन्नं, **तदिदं सर्वं गार्हपत्यः** गृहपतिना संयुक्तः **धर्म एवास्ति, तथा तत् सर्वं यूयमपि कुरुत** ॥ १६ । १८ ॥

**भाषार्थ**—हे गृहस्थ स्त्री-पुरुषो ! जैसे—(अश्विना) विद्वान् स्त्री-पुरुषों ने (यत्) जिस (हविर्धानम्) लेने वा देने योग्य संस्कृत=शुद्ध वस्तुओं के पात्र को बनाया है, और (यत्) जिस (सरस्वती) विदुषी स्त्री ने (आग्नीध्रम्) ऋत्विजों की शरण यजमान को बनाया है, (इन्द्राय) ऐश्वर्य और सुख प्रदान करने वाले पति के लिए (ऐन्द्रम्) ऐश्वर्य-सम्पन्न (सदः) घर को और (पत्नीशालम्) पत्नी-शाला को विद्वानों ने (कृतम्) तैयार किया है, वह सब (गार्हपत्यः) गृहपति से संयुक्त=सम्बद्ध धर्म ही है, वैसा वह सब तुम भी करो ॥१६ । १८॥

[हे गृहस्थाः स्त्रीपुरुषाः ! **यथा विद्वांसावश्विनौ यद्धविर्धानं कृतवन्तौ···यच्च···पत्नीशालं···कृतं तदिदं सर्वं गार्हपत्यो धर्मः**]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः । हे मनुष्याः ! यथा—ऋत्विजः सम्भारान् संचित्य यज्ञमलङ्कुर्वन्ति, तथा प्रीतियुक्तौ स्त्रीपुरुषौ गृह-कृत्यानि सततं साध्नुतम् ॥ १६ । १८ ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा-अलङ्कार है ॥ हे मनुष्यो ! जैसे ऋत्विक् लोग सामग्री को संचित करके यज्ञ को अलंकृत करते हैं वैसे प्रीति से युक्त स्त्री-पुरुष गृह-कृत्यों को सदा सिद्ध करें ॥ १६ । १८ ॥

**भाष्यसार**—१. **गृहस्थ धर्म का वर्णन**—अश्विना=विद्वान् गृहस्थी स्त्री-पुरुष उत्तम ऐश्वर्य की प्राप्ति के लिए ऐश्वर्यसम्पन्न घर का और ऋत्विजों के बैठने के लिए हविर्धानम्=यज्ञ-वेदी का निर्माण अवश्य करें ॥

२. **अलङ्कार**—इस मन्त्र में इवादि उपमावाचक पद के लुप्त होने से वाचकलुप्तोपमा अलङ्कार है । ऋत्विजों की तरह सब गृहस्थी यज्ञ अवश्य किया करें ॥ १६ । १८ ॥

हैमवर्चिः । **यज्ञः=विद्वान्** । निचृदनुष्टुप् । गान्धारः ॥

**कीदृशो विद्वान् सुखमाप्नोतीत्युच्यते ॥**

कैसा विद्वान् सुख को प्राप्त होता है, इस विषय का उपदेश किया है ॥

**प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य । प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः ॥ १९ ॥**

**पदार्थः**—(**प्रैषेभिः**) प्रैषणकर्मभिः (**प्रैषान्**) प्रेषणीयान् भृत्यान् (**आप्नोति**) (**आप्रीभिः**) याः समन्तात् प्रीणन्ति ताभिः (**आप्रीः**) सर्वथा प्रीत्युत्पादिका परिचारिकाः (**यज्ञस्य**) (**प्रयाजेभिः**) प्रयजन्ति यैस्तैः (**अनुयाजान्**) अनुकूलान् यज्ञपदार्थान् (**वषट्कारेभिः**) कर्मभिः (**आहुतीः**) याः आहूयन्ते=प्रदीयन्ते ताः ॥ १६ ॥

**अन्वयः**—यो विद्वान् प्रैषेभिः प्रैषानाप्रीभिराप्रीः प्रयाजेभिरनुयाजान् यज्ञस्य वषट्कारेभिराहुतीश्चाप्नोति स सुखी जायते ॥ १६ ॥

**सपदार्थान्वयः**—**यो विद्वान् प्रैषेभिः**

**भाषार्थ**—जो विद्वान्—(प्रैषेभिः) प्रैषण=

प्रेषणकर्मभिः **प्रैषान्** प्रेषणीयान् भृत्यान्, **आप्रीभिः** याः समन्तात् प्रीणन्ति ताभिः **आप्रीः** सर्वथा प्रीत्युत्पादिका परिचारिकाः, **प्रयाजेभिः** प्रयजन्ति यैस्तैः **अनुयाजान्** अनुकूलान् यज्ञपदार्थान्, **यज्ञस्य वषट्कारेभिः** कर्मभिः **आहुतीः** या आहूयन्ते=प्रदीयन्ते ताः **चाप्नोति, स सुखी जायते** ॥ १६ । १६ ॥

आज्ञा देना आदि कर्मों से (प्रैषान्) आज्ञा देने योग्य भृत्यों को, (आप्रीभिः) सब ओर से तृप्त करने वाली क्रियाओं से (आप्रीः) सर्वथा प्रीति को उत्पन्न करने वाली परिचारिका=सेविकाओं को, (प्रयाजेभिः) उत्तम यज्ञ-साधनों से (अनुयाजान्) अनुकूल यज्ञ-पदार्थों को, और (यज्ञस्य) यज्ञ के (वषट्कारेभिः) कर्मों से (आहुतीः) आहुतियों को प्राप्त करता है वह सुखी होता है ॥ १६ । १६ ॥

**[ यो विद्वान् प्रैषेभिः प्रैषान् ··· आप्रीः ···यज्ञस्य वषट्कारेभिराहुतीश्चाप्नोति स सुखी जायते ]**

**भावार्थः**—यस्सुशिक्षितसेवकसेविकः साधनोपसाधनयुक्तः श्रेष्ठानि कार्याणि करोति स सुखयितुं शक्नोति ॥ १६ । १६ ॥

**भावार्थ**—जो विद्वान् सुशिक्षित सेवक और सेविकाओं वाला, साधन-उपसाधनों से युक्त होकर श्रेष्ठ कार्य करता है वह सबको सुखी कर सकता है ॥ १६ । १६ ॥

**भा० पदार्थः**—प्रैषान्=सुशिक्षितसेवकान् । आप्रीः=सुशिक्षितसेविकाः । वषट्कारेभिः=श्रेष्ठकार्यैः ।

**भाष्यसार—यज्ञादि उत्तम कर्म ही सुख के हेतु**—जो विद्वान् अपने सेवकादि को यज्ञ सद्व्यवहार से प्रसन्न रखता है, उनको आदेश ऐसे देता है जिनसे उनमें आत्मीयता के भाव उत्पन्न हों, और यजनीय साधनों से यज्ञादि श्रेष्ठ कर्मों को करता है, वह सदा सुखी रहता है ॥ १६ । १६ ॥

हैमवर्चिः । **यजमानः**=विद्वान् । भुरिगुष्णिक् । ऋषभः ॥

**पुनस्तमेव विषयमाह ॥**

कैसा विद्वान् सुख को प्राप्त होता है, यह फिर उपदेश किया है ॥

**पशुभिः पशूनाप्नोति पुरोडाशैर्हवींषि । छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥ २० ॥**

**पदार्थः**—(**पशुभिः**) गवादिभिः (**पशून्**) गवादीन् (**आप्नोति**) (**पुरोडाशैः**) पचनक्रियासंस्कृतैः (**हवींषि**) होतुमर्हाणि वस्तूनि (**आ**) (**छन्दोभिः**) प्रज्ञापकैर्गायत्र्यादिभिः (**सामिधेनीः**) सम्यगिध्यन्ते याभिस्ताः सामिधेनीः (**याज्याभिः**) याभिः क्रियाभिरिज्यन्ते ताभिः (**वषट्कारान्**) ये वषट्धर्म्यां क्रियां कुर्वन्ति तान् ॥ २० ॥

**अन्वयः**—हे मनुष्याः ! यथा सद्गृहस्थः पशुभिः पशून् पुरोडाशैर्हवींषि छन्दोभिस्सामिधेनीर्याज्याभिर्वषट्कारानाप्नोति तथैतान् यूयमाप्नुत ॥ २० ॥

**सपदार्थान्वयः**—हे मनुष्याः ! **यथा सद्गृहस्थः पशुभिः** गवादिभिः **पशून्** गवादीन्, **पुरोडाशैः** पचनक्रियासंस्कृतैः **हवींषि** होतुमर्हाणि वस्तूनि, **छन्दोभिः** प्रज्ञापकैर्गायत्र्यादिभिः **सामिधेनीः** सम्यगिध्यन्ते याभिस्ताः सामिधेनीः, **याज्याभिः**

**भाषार्थ**—हे मनुष्यो ! जैसे सद्गृहस्थ पुरुष--(पशुभिः) गौ आदि पशुओं से (पशून्) गौ आदि पशुओं को, (पुरोडाशैः) पचन-क्रिया से संस्कृत=शुद्ध हुए पदार्थों से (हवींषि) होम के योग्य वस्तुओं को, (छन्दोभिः) प्रज्ञापक गायत्री

याभिः क्रियाभिरिज्यन्ते ताभिः **वषट्कारान्** ये वषट्=धर्म्यां क्रियां कुर्वन्ति तान् **आ-आप्नोति;** तथैतान् **यूयमाप्नुत** ॥ १९ । २० ॥

आदि छन्दों से (सामिधेनीः) उत्तम समिधाओं को, (याज्याभिः) यज्ञ-क्रियाओं से (वषट्कारान्) वषट्=धर्मयुक्त आचरण करने वालों को (आ-आप्नोति) सर्वथा प्राप्त करता है वैसे इन्हें तुम प्राप्त करो ॥ १९ । २० ॥

[सद्गृहस्थः पशुभिः पशून्, पुरोडाशैर्हवींषि, छन्दोभिः सामिधेनीः, याज्याभिर्वषट्कारान्, आप्नोति]

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः। योऽत्र बहु पशुः, हविर्भुक्, वेदवित्, सत्क्रियो मनुष्यो भवेत् स प्रशंसामाप्नोति ॥ १९ । २० ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ॥ जो यहाँ बहुत पशुओं वाला, होम करके भोजन करने वाला, वेदज्ञ, श्रेष्ठ आचरण वाला मनुष्य होता है वह प्रशंसा को प्राप्त करता है ॥ १९ । २० ॥

**भा० पदार्थः**—वषट्कारान्=सत्क्रियान् मनुष्यान् ।

**भाष्यसार**—१. **यजमान ही उत्तम सुखों का अधिकारी**—जो विद्वान् गायादि पशुओं के दूध, घृतादि शुद्ध किये हुए पदार्थों से, गायत्री आदि मन्त्रों से उत्तम समिधाओं से यज्ञ क्रियाएँ सम्पादित करता रहता है, वह धर्मयुक्त आचरण होने से सुखों को प्राप्त करता है ।

२. **अलङ्कार**—इस मन्त्र में उपमावाचक इवादि शब्द के लुप्त होने से वाचकलुप्तोपमा अलङ्कार है ॥ १९ । २० ॥

हैमवर्चिः । **सोमः**=ओषधिः । अनुष्टुप् । गान्धारः ॥

**के पदार्था हविष्या इत्याह ॥**

कौन पदार्थ होम के योग्य हैं, इस विषय का उपदेश किया है ॥

**धानाः क॒र॒म्भः स॒क्तवः॑ परीवा॒पः पयो॒ दधि॑ । सोम॑स्य रू॒पꣳ ह॒विष॑ऽआ॒मिक्षा॑ वा॒जिनं॒ मधु॑ ॥ २१ ॥**

**पदार्थः**—(**धानाः**) भृष्टयवादयः (**करम्भः**) करोति मथनं येन सः (**सक्तवः**) (**परीवापः**) परितः=सर्वतो वापो=बीजारोपणं यस्मिन् सः (**पयः**) दुग्धम् (**दधि**) (**सोमस्य**) अभिषोतुमर्हस्य (**रूपम्**) (**हविषः**) होतुमर्हस्य (**आमिक्षा**) दधिदुग्धमिष्टैर्निर्मिता (**वाजिनम्**) वाजः=प्रशस्तान्यन्नानि विद्यन्ते येषु तेषामिदं सारं वस्तु (**मधु**) मधुरम् ॥ २१ ॥

**अन्वयः**—हे मनुष्याः ! यूयं हविषस्सोमस्य रूपं धानाः करम्भः सक्तवः परीवापः पयो दध्यामिक्षा वाजिनं मधु च विजानीत ॥ २१ ॥

**सपदार्थान्वयः**—**हे मनुष्याः ! यूयं** हविषः होतुमर्हस्य **सोमस्य** अभिषोतुमर्हस्य **रूपं, धानाः** भृष्टयवादयः **करम्भः** करोति मथनं येन सः **सक्तवः परीवापः** परितः=सर्वतो वापो=बीजारोपणं यस्मिन् सः **पयः** दुग्धं **दध्यामिक्षा** दधिदुग्धमिष्टैर्निर्मिता **वाजिनं** वाजः=प्रशस्तान्यन्नानि

**भाषार्थ**—हे मनुष्यो ! तुम—(हविषः) होम करने योग्य (सोमस्य) सोम-रस के (रूपम्) वरूप, (धानाः) भूने हुए यव=जौ आदि, (करम्भः) मथने का साधन, (सक्तवः) सत्तू, (परीवापः) जिनमें सब ओर बीजारोपण किया जाता है वह क्षेत्र, (पयः) दूध, (दधि) दही,

विद्यन्ते येषु तेषामिदं सारं वस्तु **मधु** मधुरं **च विजानीत** ॥ १९ । २१ ॥

(आमिक्षा) दही, दूध और मीठे से बना पदार्थ विशेष, (वाजिनम्) प्रशस्त अन्न जिनमें हैं उनकी सारभूत वस्तु और (मधु) शहद, इन पदार्थों को जानो ॥ १९ । २१ ॥

[ हे मनुष्या ! यूयं हविषो रूपं ··· विजानीत ]

**भावार्थः**—ये पदार्थाः पुष्टि-सुगन्ध-मधुर-रोगनाशकत्वगुणयुक्तास्सन्ति ते हविः संज्ञकाः सन्ति ॥ १९ । २१ ॥

**भावार्थ**—जो पदार्थ पुष्टिकारक, सुगन्धित, मधुर और रोगनाशक हैं वे 'हवि' कहलाते हैं ॥ १९ । २१ ॥

**भाष्यसार**—**कैसी ओषधियाँ हवनीय हैं ?**—जो सोमलतादि रोगनाशक और पौष्टिक ओषधियाँ हैं, जो यवादि अन्न, और जो घृत दूधादि सारभूत पौष्टिक पदार्थ हैं, और जो शहदादि मधुर गुण युक्त पदार्थ हैं, ये होम करने योग्य हैं ॥ १९ । २१ ॥

हैमवर्चिः । **यज्ञः**=अन्नानां सुरूपकरणम् । अनुष्टुप् । गान्धारः ॥

**कीदृशा जनाः नीरोगा भवन्तीत्युपदिश्यते ॥**

कैसे मनुष्य नीरोग होते हैं, इस विषय का उपदेश किया है ॥

**धानानाᳬं रूपं कुवलं परीवापस्य गोधूमाः । सक्तूनाᳬं रूपं बदरमुपवाकाः करम्भस्य ॥ २२ ॥**

**पदार्थः**—(**धानानाम्**) भृष्टयवाद्यन्नानाम् (**रूपम्**) (**कुवलम्**) कोमलं बदरीफलमिव (**परीवापस्य**) पिष्टादेः (**गोधूमाः**) (**सक्तूनाम्**) (**रूपम्**) (**बदरम्**) बदरीफलवद्वर्णयुक्तम् (**उपवाकाः**) उपगताः=प्राप्ता यवाः (**करम्भस्य**) दधिसंसृष्टस्य सक्तुनः ॥ १९ । २२ ॥

**अन्वयः**—हे मनुष्याः ! यूयं धानानां कुवलं रूपं परीवापस्य गोधूमा रूपं सक्तूनां बदरं रूपं करम्भस्योपवाका रूपमस्तीति विजानीत ॥ १९ । २२ ॥

**सपदार्थान्वयः**— **हे मनुष्याः ! यूयं धानानां** भृष्टयवाद्यन्नानां **कुवलं** कोमलं बदरीफलमिव **रूपं, परीवापस्य** पिष्टादेः **गोधूमा रूपं, सक्तूनां बदरं** बदरीफलवद्वर्णयुक्तं **रूपं, करम्भस्य** दधि-संसृष्टस्य सक्तुनः **उपवाकाः** उपगताः=प्राप्ता यवाः **रूपमस्तीति विजानीत** ॥ १९ । २२ ॥

**भाषार्थ**—हे मनुष्यो ! तुम (धानानाम्) भूने हुए यव=जौ आदि अन्नों का (कुवलम्) बेर के समान कोमल (रूपम्) रूप है, (परीवापस्य) पिष्ट=चूर्ण आदि का (गोधूमाः) गेहूँ (रूपम्) रूप है, (सक्तूनाम्) सत्तुओं का (बदरम्) बदरी=बेर फल के रंग के तुल्य (रूपम्) रूप है, (करम्भस्य) दही से युक्त सत्तु का (उपवाकाः) यव=जौ (रूपम्) रूप है; ऐसा जानो ॥ १९ । २२ ॥

[ हे मनुष्याः ! यूयं धानानां कुवलं रूपं······विजानीत ]

**भावार्थः**—ये मनुष्याः सर्वेषामन्नानां सुरूपं कृत्वा भुञ्जते भोजयन्ति च त एव आरोग्य-माप्नुवन्ति ॥ १९ । २२ ॥

**भावार्थ**—जो मनुष्य अन्नों को सुरूप बनाकर खाते और खिलाते हैं वे ही आरोग्य को प्राप्त होते हैं ॥ १९ । २२ ॥

**भाष्यसार**—**अन्नों का सुरूपकरण ही आरोग्यप्रद है**—मनुष्य यवादि अन्नों को, बेर के

समान कोमल फलों को और गेहूँ आदि के चूर्ण रूप सत्तुओं को संस्कृत करके सुरूप बनाकर ही सेवन करें। जिससे वे आरोग्यवर्धक होकर शरीर को नीरोग रक्खें ॥ १९ । २२ ॥

हैमवर्चिः । **सोमः**=ओषधिः । अनुष्टुप् । गान्धारः ॥

**पुनस्तमेव विषयमाह ॥**

कैसे मनुष्य नीरोग होते हैं, यह फिर उपदेश किया है ॥

**पयसो रूपं यद्यवा दध्नो रूपं कर्कन्धूनि । सोमस्य रूपं वाजिनᳯं सौम्यस्य रूपमामिक्षा ॥ २३ ॥**

**पदार्थः**—(**पयसः**) दुग्धस्य=जलस्य (**रूपम्**) (**यत्**) ये (**यवाः**) (**दध्नः**) (**रूपम्**) (**कर्कन्धूनि**) कर्कन्धुफलानि=स्थूलानि पक्वानि बदरीफलानीव (**सोमस्य**) (**रूपम्**) (**वाजिनम्**) बह्वन्नसाररूपम् (**सौम्यस्य**) सोमानामोषधिसाराणां भावस्य (**रूपम्**) (**आमिक्षा**) मधुराम्लादिसंयोग-युक्ता ॥ १९ । २३ ॥

**अन्वयः**—हे मनुष्याः ! यद्यवास्तान् पयसो रूपं कर्कन्धूनीव दध्नो रूपं वाजिनमिव सोमस्य रूपमामिक्षेव सौम्यस्य रूपं सम्पादयत ॥ १९ । २३ ॥

**सपदार्थान्वयः**—हे **मनुष्याः** ! **यत्** ये **यवास्तान् पयसः** दुग्धस्य जलस्य **रूपं**, **कर्कन्धूनि** कर्कन्धुफलानि=स्थूलानि पक्वानि बदरीफलानि इव **दध्नो रूपं**, **वाजिनं** बह्वन्नसाररूपम् **इव सोमस्य रूपमामिक्षा** मधुराम्लादिसंयोगयुक्ता **इव सौम्यस्य** सोमानामोषधिसाराणां भावस्य **रूपं सम्पाद-यत** ॥ १९ । २३ ॥

**भाषार्थ**—हे मनुष्यो ! (यत्) जो (यवाः) यव=जौ हैं उनके समान (पयसः) दुग्ध=जल के (रूपम्) रूप को (कर्कन्धूनि) स्थूल पके हुए बदरी फलों के समान (दध्नः) दही के (रूपम्) रूप को (वाजिनम्) बहुत अन्नों के सार-रूप के समान (सोमस्य) सोम ओषधि के (रूपम्) रूप को, (आमिक्षा) मधुर और अम्ल=खट्टा आदि के संयोग से युक्त पदार्थ के समान (सौम्यस्य) ओषधि-सारों के तत्त्व रूप को सिद्ध करो ॥ १९ । २३ ॥

**[हे मनुष्याः । यत् यवास्ते पयसो रूपं······सम्पादयत]**

**भावार्थः**—अत्र वाचकलुप्तोपमालङ्कारः । मनुष्यैर्यस्य यस्यान्नस्य सुन्दरं रूपं यथा स्यात्, तस्य रूपं तथा सदा सम्पादनीयम् ॥ १९ । २३ ॥

**भावार्थ**—इस मन्त्र में वाचकलुप्तोपमा अलङ्कार है ॥ मनुष्य—जिस-जिस अन्न का सुन्दर रूप जैसे हो सके उसका रूप वैसे सदा सिद्ध करें ॥ १९ । २३ ॥

**भाष्यसार**—**१. संस्कृत ओषधियाँ सेवनीय हैं**—सब मनुष्यों को उचित है वे यवादि अन्नों को, पके हुए बदरी की तरह सुरूप वाले फलों को, दही आदि दूध के विकारों को, पौष्टिक सोमलतादि ओषधियों को संस्कृत करके सेवन करें। तब ही ये पूर्ण लाभप्रद होती हैं ॥ ॥ १९ । २३ ॥

**२. अलङ्कार**—इस मन्त्र में उपमावाचक इवादि पद लुप्त होने से वाचकलुप्तोपमा अलङ्कार है। बदरी के समान कोमल तथा सुरूप वाले फलों का प्रयोग करें, यह उपमा है ॥ १९ । २३ ॥

हैमर्वचिः । **विद्वान्**=स्पष्टम् । निचृदनुष्टुप् । गान्धारः ॥

**कथं विद्वांसो भवन्तीत्युपदिश्यते ॥**

कैसे विद्वान् होते हैं, इस विषय का उपदेश किया है ॥

**आ श्रा॒वयेति॑ स्तो॒त्रियाः॑ प्रत्याश्रा॒वो॑ऽनु॒रूपः॑ । यजेति॑ धाय्यारू॒पं प्र॑गा॒था ये॑ यजाम॒हाः ॥ २४ ॥**

**पदार्थः**—(**आ**) समन्तात् । (**श्रावय**) विद्योपदेशान् कुरु (**इति**) प्रकारार्थे (**स्तोत्रियाः**) ये स्तोत्राण्यर्हन्ति ते (**प्रत्याश्रावः**) यः प्रतिश्राव्यते सः (**अनुरूपः**) अनुकूलः (**यजा इति**) (**धाय्यारूपम्**) या धेयमर्हा तस्या रूपम् (**प्रगाथाः**) ये प्रकर्षेण गीयन्ते ते (**ये यजामहाः**) ये भृशं यजन्ति ते ॥ २४ ॥

**अन्वयः**—हे विद्वँस्त्वं विद्यार्थिनः आश्रावय । ये स्तोत्रियास्तान् प्रत्याश्रावोऽनुरूप इति ये यजामहाः प्रगाथा इति यजेति धाय्यारूपं यथा**था**त् जानीहि ॥ २४ ॥

**सपदार्थान्वयः**—हे विद्वन् ! त्वं **विद्यार्थिन आश्रावय** समन्ताद् विद्योपदेशान् कुरु ।

**ये स्तोत्रियाः** ये स्तोत्राण्यर्हन्ति ते **तान् प्रत्याश्रावः** यः प्रतिश्राव्यते सः **अनुरूपः** अनुकूलः **इति, ये यजामहाः** ये भृशं यजन्ति ते **प्रगाथाः** ये प्रकर्षेण गीयन्ते ते **इति, यजेति धाय्यारूपं** या धेयमर्हा तस्या रूपं **यथावत् जानीहि** ॥ १९ । २४ ॥

**भाषार्थ**—हे विद्वान् ! तू—विद्यार्थियों को (आश्रावय) सब ओर से विद्या-उपदेश कर ।

जो (स्तोत्रियाः) स्तुति करने वाले हैं उनके प्रति (प्रत्याश्रावः) सुनने-सुनाने योग्य विद्या-विषय (अनुरूपः) अनुकूल हो (इति) ऐसा; (ये यजामहाः) जो अधिक यज्ञ करने वाले हैं वे (प्रगाथाः) उत्तम रीति से गाए जाते हैं (इति) ऐसा; (यजेति) यज्ञ कर (इति) यह (धाय्यारूपम्) धारण करने योग्य आज्ञा का रूप है, उसे यथावत् जान ॥ १९ । २४ ॥

**[ हे विद्वँस्त्वं विद्यार्थिन आश्रावय ]**

**भावार्थः**—ये परस्परं प्रीत्या विद्याविषयान् शृण्वन्ति श्रावयन्ति च, ते विद्वांसो जायन्ते ॥ २४॥

**भावार्थ**—जो परस्पर प्रीति से विद्या-विषयों को सुनते और सुनाते हैं वे विद्वान् हो जाते हैं ॥ १९ । २४ ॥

**भाष्यसार**—**विद्वान् कैसे बनते हैं ?**—जो विद्वानों की संगति से उनकी बातों को ध्यान से सुनते हैं, गुरुजनों के गुणों की सदा प्रशंसा करते हैं, जो पढ़कर दूसरों को सिखाते हैं और जो पढ़ी हुई बातों को जीवन में धारण करते हैं, वे श्रवण, मनन आदि उपायों से विद्वान् हो जाते हैं ॥ १९ । २४ ॥

हैमर्वचिः । **सोमः**=रसविशेषः । भुरिगनुष्टुप् । गान्धारः ॥

**कथमध्यापकैर्भवितव्यमित्युपदिश्यते ॥**

अध्यापकों को कैसा होना चाहिए, इस विषय का उपदेश किया है ॥

**अ॒र्ध॒ऽऋ॒चैरु॒क्थानां॑ꣳ रू॒पं प॒दैरा॑प्नोति नि॒विदः॑ । प्र॒ण॒वैः श॒स्त्राणा॑ꣳ रू॒पं पय॑सा॒ सोम॑ऽआप्यते ॥ २५ ॥**

**पदार्थः**—(**अर्द्धऽऋचैः**) ऋचामर्द्धान्यर्द्धर्चास्तैर्मन्त्रभागैः (**उक्थानाम्**) स्तोत्रविशेषाणाम् (**रूपम्**) (**पदैः**) विभक्त्यन्तैः (**आप्नोति**) (**निविदः**) ये निश्चयेन विन्दन्ति तान् (**प्रणवैः**) ओङ्कारैः (**शस्त्राणाम्**) शंसन्ति यैस्तेषाम् (**रूपम्**) (**पयसा**) उदकेन (**सोमः**) रसविशेषः (**आप्यते**) प्राप्यते ॥ २५ ॥

**अन्वयः**—यो विद्वानर्द्धऽऋचैरुक्थानां रूपं पदैः प्रणवैः शस्त्राणां रूपं निविदश्चाप्नोति येन विदुषा पयसा सोम आप्यते स वेदवित्कथ्यते ॥ २५ ॥

**सपदार्थान्वयः**—**यो विद्वानर्द्धऽऋचैः** ऋचामर्द्धान्यर्द्धर्चास्तैर्मन्त्रभागैः **उक्थानां** स्तोत्रविशेषाणां **रूपं पदैः** विभक्त्यन्तैः **प्रणवैः** ओङ्कारैः **शस्त्राणां** शंसन्ति यैस्तेषां **रूपं निविदः** ये निश्चयेन विन्दन्ति तान् **चाप्नोति, येन विदुषा पयसा** उदकेन **सोमः** रसविशेषः **आप्यते** प्राप्यते, **स वेदवित्कथ्यते** ॥ १९ । २५ ॥

**भाषार्थ**—जो विद्वान् (अर्द्धऽऋचैः) आधी ऋचाएँ अर्थात् मन्त्र-भागों के द्वारा (उक्थानाम्) उक्थ=स्तोत्र-विशेषों के (रूपम्) रूप को, (पदैः) विभक्ति-अन्त पदों से एवं (प्रणवैः) ओङ्कारों से (शस्त्राणाम्) शस्त्रों के (रूपम्) रूप को, और (निविदः) निश्चय से विद्या-प्राप्त करने वाले जिज्ञासुओं को (आप्नोति) प्राप्त करता है, और जिस विद्वान् के द्वारा (पयसा) जल से (सोमः) रस-विशेष (आप्यते) प्राप्त किया जाता है, वह विद्वान् वेदवित्=वेदज्ञ कहलाता है ॥ १९ । २५

[यो विद्वानर्द्धऽऋचैरुक्थानां रूपं, पदैः शस्त्राणां रूपं, निविदश्चाप्नोति ''स वेदवित्कथ्यते]

**भावार्थः**—ये विदुषः सकाशादधीत्य वेदस्थानां पदवाक्यमन्त्रविभागशब्दार्थसम्बन्धानां यथार्थं विज्ञानं कुर्वन्ति, तेऽत्राध्यापका भवन्ति ॥

**भावार्थ**—जो विद्वानों से पढ़कर वेदस्थ पद, वाक्य, मन्त्रविभाग, शब्द, अर्थ और सम्बन्ध को यथार्थ जान लेते हैं वे यहाँ अध्यापक बनते हैं ॥ १९ । २५ ॥

**भाष्यसार**—**विशेष आनन्द की प्राप्ति किसे होती है ?**—जो मनुष्य वेद के मन्त्रों के एक-एक पद के शब्दार्थ सम्बन्ध को वेद के स्तोत्रविशेषों के विभक्ति सहित पदों को और ओङ्कारों से दुर्गुणों को नष्ट करने वाले सुविचारों को जानकर दूसरों को सिखाते रहते हैं, वे विशेष-आनन्द को प्राप्त करते हैं ॥ १९ । २५ ॥ ●

हैमवर्चिः । **यज्ञः=जगदुपकारः** । अनुष्टुप् । गान्धारः ॥
**सत्पुरुषैः कथं भवितव्यमित्याह ॥**

सत्पुरुषों को कैसा होना चाहिए, यह उपदेश किया है ॥

**अश्विभ्यां प्रातःसवनमिन्द्रेणैन्द्रं माध्यन्दिनम् । वैश्वदेवꣳ सरस्वत्या तृतीयमाप्तꣳ सवनम् ॥ २६ ॥**

**पदार्थः**—(**अश्विभ्याम्**) सूर्याचन्द्रमोभ्याम् (**प्रातस्सवनम्**) प्रातःकाले सवनं=यज्ञक्रिया-प्रेरणम् (**इन्द्रेण**) विद्युता (**ऐन्द्रम्**) ऐश्वर्यकारकम् (**माध्यन्दिनम्**) मध्याह्ने भवम् (**वैश्वदेवम्**) विश्वेषां देवानामिदम् (**सरस्वत्या**) सत्यया वाचा (**तृतीयम्**) त्रयाणां पूरकम् (**आप्तम्**) व्याप्तं=प्राप्तम् (**सवनम्**) आरोग्यकरं होमादिकम् ॥ १९ । २६ ॥

**अन्वयः**—यैरश्विभ्यां प्रथमं प्रातःसवनमिन्द्रेणैन्द्रं द्वितीयं माध्यन्दिनं सवनं सरस्वत्या वैश्वदेवं तृतीयं सवनमाप्तन्ते जगदुपकारकाः सन्ति ॥ १९ । २६ ॥

**सपदार्थान्वयः**—**यैरश्विभ्यां** सूर्याचन्द्रमोभ्यां **प्रथमं प्रातःसवनं** प्रातःकाले सवनं=

**भाषार्थ**—जिन्होंने (अश्विभ्याम्) सूर्य और चन्द्रमा के द्वारा प्रथम (प्रातःसवनम्) प्रातः

यज्ञक्रियाप्रेरणम्, **इन्द्रेण** विद्युता **ऐन्द्रम्** ऐश्वर्यकारकं **द्वितीयं माध्यन्दिनं** मध्याह्ने भवं **सवनम्** आरोग्यकरं होमादिकं, **सरस्वत्या** सत्यया वाचा **वैश्वदेवं** विश्वेषां देवानामिदं **तृतीयं** त्रयाणां पूरकं **सवनम्** आरोग्यकरं होमादिकम् **आप्तं** व्याप्तं=प्राप्तं **ते जगदुपकारकाः सन्ति** ॥ १९ । २६ ॥

काल यज्ञकर्म की प्रेरणा को, (इन्द्रेण) विद्युत् के द्वारा (ऐन्द्रम्) ऐश्वर्य कारक, द्वितीय (माध्यन्दिनम्) मध्याह्न के (सवनम्) आरोग्यकारी होम आदि को, (सरस्वत्या) सत्य वाणी के द्वारा (तृतीयम्) तृतीय (सवनम्) आरोग्यकारी होम आदि को (आप्तम्) प्राप्त किया है; वे जगत् के उपकारक होते हैं ॥ २६॥

**[यैरश्विभ्यां प्रथमं प्रातःसवनं······आप्तं ते जगदुपकारकाः सन्ति]**

**भावार्थः**—ये त्रिषु कालेषु सार्वजनिकहितमाचरन्ति, तेऽत्र सत्पुरुषास्सन्ति ॥ १९ । २६ ॥

**भावार्थ**—जो तीनों कालों में सार्वजनिक हित करते हैं वे यहाँ सत्पुरुष होते हैं ॥ १९ । २६ ॥

**भाष्यसार—यज्ञ करने वाले ही सत्पुरुष हैं**—जो श्रेष्ठ मनुष्य सूर्य और चन्द्र की तरह विद्यादि गुणों से अज्ञानान्धकार का विनाश करते हैं, श्रेष्ठ कार्यों में सूर्य की तरह सब को प्रेरित करते हैं, और चन्द्र की तरह सबको आह्लादित करते हैं, वे प्रातःसवन रूप यज्ञ के कर्ता हैं। जो विद्युदादि के द्वारा ऐश्वर्य-प्राप्ति के साधनों को विज्ञान के द्वारा प्राप्त कराते हैं, वे माध्यन्दिन-सवन के कर्त्ता हैं। और जो सत्य-वाणी के द्वारा न्यायाचरण करते हैं, वे तृतीय सवन के कर्ता हैं ॥ १९ । २६ ॥

हैमवर्चिः । **यज्ञः=अन्नसंस्कारक्रिया** । भुरिगनुष्टुप् । गान्धारः ॥

**विदुषा कथं भवितव्यमित्याह ॥**

विद्वान् को कैसा होना चाहिए, इस विषय का उपदेश किया है ॥

**वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् ।**
**कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति ॥ २७ ॥**

**पदार्थः**—(**वायव्यैः**) वायुषु भवैर्वायुदेवताकैर्वा (**वायव्यानि**) वायुषु भवानि वायुदेवताकानि वा (**आप्नोति**) (**सतेन**) विभक्तेन कर्मणा (**द्रोणकलशम्**) द्रोणश्च कलशश्च तत् (**कुम्भीभ्याम्**) धान्यजलाधाराभ्याम् (**अम्भृणौ**) अपो बिभर्ति याभ्यां तौ (**सुते**) निष्पादिते । **लिङ्गव्यत्ययश्छान्दसः** (**स्थालीभिः**) यासु पदार्थान् स्थापयन्ति पाचयन्ति वा ताभिः (**स्थालीः**) (**आप्नोति**) ॥ २७ ॥

**प्रमाणार्थ**—(**सुते**) निष्पादिते । यहाँ लिङ्ग का व्यत्यय छान्दस है ॥

**अन्वयः**—यो विद्वान् वायव्यैर्वायव्यानि सतेन द्रोणकलशमाप्नोति कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति स आढ्यो जायते ॥ २७ ॥

**सपदार्थान्वयः—यो विद्वान् वायव्यैः** वायुषु भवैर्वायुदेवताकैर्वा **वायव्यानि** वायुषु भवानि देवताकानि वा **सतेन** विभक्तेन कर्मणा **द्रोणकलशं** द्रोणश्च कलशश्च तद् **आप्नोति, कुम्भीभ्यां** धान्यजलाधाराभ्याम् **अम्भृणौ** अपो बिभर्ति याभ्यां तौ **सुते** निष्पादिते **स्थालीभिः** यासु पदार्थान् स्थापयन्ति

**भाषार्थ**—जो विद्वान्—(वायव्यैः) वायु में विद्यमान वा वायु-देवता वाले पदार्थों से (वायव्यानि) वायु में विद्यमान वा वायु-देवता वाले गुणों एवं कर्मों को, (सतेन) विभक्त कर्म से (द्रोणकलशम्) द्रोण परिमाण और कलश को (आप्नोति) प्राप्त करता है, (कुम्भीभ्याम्) धान्य और जल के दो

पाचयन्ति वा ताभिः **स्थालीराप्नोति, स आढ्यो जायते** ॥ १९ । २७ ॥

पात्रों से (अम्भृणौ) जल को धारण करने वाले दो पात्रों एवं (सुते) तैयार किए हुए दो रसों को, (स्थालीभिः) पदार्थों को रखने वा पकाने के पात्रों से (स्थालीः) पदार्थों को रखने और पकाने को (आप्नोति) प्राप्त करता है; वह आढ्य=सम्पन्न हो जाता है ॥ १९ । २७ ॥

**[ यो विद्वान् वायव्यैर्वायव्यानि ]**

**भावार्थः**—कश्चिदपि मनुष्यो वायुकार्याण्यविदित्वा,

**भावार्थ**—कोई भी मनुष्य वायु के कार्यों को न जानकर,

**[ सतेन द्रोणकलशम् ]**

एतत्कारणेन विना परिमाणविद्याम्,

इसके कारण-ज्ञान के विना परिमाण-विद्या को,

**[ कुम्भीभ्यामम्भृणौ सुते ]**

अनया विना पाकविद्यां,

इसके विना पाक-विद्या को,

**[ स्थालीभिः स्थालीराप्नोति ]**

तामन्तरान्तसंस्कारक्रियां च प्राप्तुं न शक्नोति ॥ १९ । २७ ॥

और उसके विना अन्न-संस्कार की क्रिया को प्राप्त नहीं कर सकता ॥ १९ । २७ ॥

**भाष्यसार—अन्न-संस्कार करने का प्रकार**—वायु को शुद्ध करने वाले पदार्थों से वायु की शुद्धि करके अन्नों को संस्कृत करें। अन्नों को भक्षण योग्य बनाने के लिए कलशादि पात्रों में धान्य और जल का संयोग करके प्रक्षालन क्रिया से संस्कृत करे। इसी प्रकार पकाने के स्थाली आदि पात्रों को प्राप्त करके अन्न को संस्कृत करें ॥ १९ । २७ ॥

हैमवर्चिः । **यज्ञः**=वेदाभ्यासः । अनुष्टुप् । गान्धारः ॥

**सर्वे वेदमभ्यस्येयुरित्याह ॥**

सब लोग वेद का अभ्यास करें, इस विषय का उपदेश किया है ॥

**यजुर्भिराप्यन्ते ग्रहा ग्रहैः स्तोमाश्च विष्टुतीः । छन्दोभिरुक्थाशस्त्राणि साम्नावभृथऽआप्यते ॥ २८ ॥**

**पदार्थः**—(**यजुर्भिः**) यजन्ति=सङ्गच्छन्ते यैर्यजुर्वेदविद्यावयवैस्तैः (**आप्यन्ते**) (**ग्रहाः**) यैः सर्वं क्रियाकाण्डं गृह्णन्ति ते व्यवहाराः (**ग्रहैः**) (**स्तोमाः**) पदार्थगुणप्रशंसाः (**च**) (**विष्टुतीः**) विविधाश्च ताः स्तुतयश्च ताः (**छन्दोभिः**) गायत्र्यादिभिर्विद्वद्भिः स्तोतृभिर्वा । छन्द इति स्तोतृना० ॥ निघं० ३ । १६ ॥ (**उक्थाशस्त्राणि**) उक्थानि च तानि शस्त्राणि च । अत्रान्येषामपीति पूर्वपदस्य दीर्घः । (**साम्ना**) सामवेदेन (**अवभृथः**) शोधनम् (**आप्यते**) प्राप्यते ॥ २८ ॥

**प्रमाणार्थ**—(**छन्दोभिः**) 'छन्द' यह पद निघं० (३ । १६) में स्तोतृ-नामों में पठित है ॥ (**उक्थाशस्त्राणि**) यहाँ 'अन्येषामपि दृश्यते' (६ । ३ । १३७) से पूर्वपद को दीर्घ है ॥

**अन्वयः**—हे मनुष्याः ! युष्माभिर्यैर्यजुर्भिर्ग्रहाः ग्रहैः स्तोमा विष्टुतीश्च छन्दोभिरुक्थाशस्त्राणि चाप्यन्ते साम्नावभृथ आप्यते तेषामुपयोगो यथावत्कर्त्तव्यः ॥ २८ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! **युष्माभिर्यैर्यजुर्भिः** यजन्ति=सङ्गच्छन्ते यैर्यजुर्वेद-विद्यावयवैस्तैः **ग्रहाः** यैः सर्वं क्रियाकाण्डं गृह्णन्ति ते व्यवहाराः, **ग्रहैः स्तोमाः** पदार्थगुणप्रशंसाः, **विष्टुतीः** विविधाश्च ताः स्तुतयश्च ताः **च छन्दोभिः** गायत्र्यादिभिर्विद्वद्भिः स्तोतृभिर्वा, **उक्थाशस्त्राणि** उक्थानि च तानि शस्त्राणि च **चाप्यन्ते साम्ना** सामवेदेन **अवभृथः** शोधनम् **आप्यते** प्राप्यते, **तेषामुपयोगो यथावत्कर्त्तव्यः** ॥

**भाषार्थ**—हे मनुष्यो ! तुमसे—जिन (यजुर्भिः) संगतिकरण के साधन यजुर्वेदविद्या के अवयवों से (ग्रहाः) सब क्रियाकाण्ड को ग्रहण करने हारे व्यवहार, (ग्रहैः) उक्त व्यवहारों से (स्तोमाः) पदार्थों के गुणों की प्रशंसाएँ और (विष्टुतीः) विविध स्तुतियाँ; (छन्दोभिः) गायत्री आदि छन्द, विद्वानों वा स्तोताओं से (उक्था-शस्त्राणि) उत्तम वचन और शस्त्र (आप्यन्ते) प्राप्त किए जाते हैं; और—(साम्ना) सामवेद से (अवभृथः) शोधन (आप्यते) प्राप्त किया जाता है—उनका उपयोग यथावत् करो ॥ १९ । २८ ॥

[यजुर्भिर्ग्रहा···चाप्यन्ते, साम्ना ऽवभृथ आप्यते]

**भावार्थः**—कश्चिदपि मनुष्यो वेदाभ्यासेन विना अखिलाः साङ्गोपाङ्गविद्याः प्राप्तुं नार्हति ॥

**भावार्थ**—कोई भी मनुष्य वेदाभ्यास के विना सब साङ्गोपाङ्ग विद्याओं को प्राप्त नहीं कर सकता ॥ १९ । २८ ॥

**भाष्यसार**—**वेदाभ्यास से विद्या की प्राप्ति**—यजुर्वेद से सब मनुष्य संगति करने योग्य सद्व्यवहारों को, सद्व्यवहारों से सब पदार्थों के गुण-विज्ञान तथा स्तुतियों को उत्तम वचन तथा, शस्त्रविद्या की शिक्षा ऋग्वेद के छन्दोबद्ध मन्त्रों से सीखें और सामवेद के मन्त्रों से उपासना करके मन, आत्मादि की शुद्धि सदा किया करें ॥ १९ । २८ ॥

हैमवर्चिः । **इडा**=पृथिवी । निचृदनुष्टुप् । गान्धारः ॥

**गृहस्थैः पुरुषैः किं कर्त्तव्यमित्याह ॥**

गृहस्थ पुरुषों को क्या करना चाहिए, इस विषय का उपदेश किया है ॥

**इडाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः । शंयुना पत्नीसंयाजान्त्समिष्टयजुषा सꣳस्थाम् ॥ २९ ॥**

**पदार्थः**—(**इडाभिः**) पृथिवीभिः । इडेति पृथिवीना० ॥ निघं० १ । १ ॥ (**भक्षान्**) भक्षितुमर्हान् भोज्यान् पदार्थान् (**आप्नोति**) (**सूक्तवाकेन**) सुष्ठूच्यते तत् सूक्तवाकन्तेन (**आशिषः**) इच्छाः (**शंयुना**) सुखमयेन (**पत्नीसंयाजान्**) ये पत्न्या सह समिज्यन्ते तान् (**समिष्टयजुषा**) सम्यगिष्टं येन भवति तेन (**संस्थाम्**) सम्यक् तिष्ठन्ति यस्यां ताम् ॥ २९ ॥

**प्रमाणार्थ**—(इडाभिः) पृथिवीभिः । 'इडा' पद निघं० ( १ । १ ) में पृथिवी-नामों में पठित है ॥

**अन्वयः**—यो विद्वान् इडाभिर्भक्षान् सूक्तवाकेनाशिषः शंयुना पत्नीसंयाजान् समिष्टयजुषा संस्थामाप्नोति स सुखी कथं न स्यात् ॥ २९ ॥

**सपदार्थान्वयः**—यो विद्वानिडाभिः पृथिवीभिः **भक्षान्** भक्षितुमर्हान् भोज्यान् पदार्थान्,

**भाषार्थ**—जो विद्वान्—(इडाभिः) पृथिवी से (भक्षान्) भक्षण करने योग्य भोज्य पदार्थों को

**सूक्तवाकेन** सुष्ठूच्यते तत् सूक्तवाकन्तेन **आशिषः** इच्छाः; **शंयुना सुखमयेन पत्नीसंयाजान्** ये पत्न्या सह समिज्यन्ते तान्, **समिष्टयजुषा** सम्यगिष्टं येन भवति तेन **संस्थां** सम्यक् तिष्ठन्ति यस्यां ताम्, **आप्नोति; स सुखी कथं न स्यात्** ॥ १९ । २९ ॥

(सूक्तवाकेन) उत्तम वचन से (आशिषः) इच्छाओं को, (शंयुना) सुखमय व्यवहार से (पत्नीसंयाजान्) पत्नी के साथ यजन करने वालों को, (समिष्टयजुषा) उत्तम यज्ञ के साधन से (संस्थाम्) उत्तम स्थिति को (आप्नोति) प्राप्त करता है, वह सुखी क्यों न हो ॥ १९ । २९ ॥

**[ यो विद्वानिडाभिर्भक्षान्—आशिष··· संस्थामाप्नोति स सुखी कथं न स्यात् ]**

**भावार्थः**—गृहस्था वेदविज्ञानेनैव पृथिवी-राज्यभोगेच्छां तत्सिद्धिं संस्थितिं चाप्नुवन्तु ॥ २९ ॥

**भावार्थ**—गृहस्थ लोग वेद के विज्ञान से ही पृथिवी के राज्य को भोगने की इच्छा, उसकी सिद्धि और संस्थिति को प्राप्त करें ॥ १९ । २९ ॥

**भाष्यसार**—**गृहस्थ पुरुषों के कर्त्तव्य**—इडाभिः=पृथिवी पर घर बनाकर रहने वाले गृहस्थ पुरुषों का कर्त्तव्य है कि वे भक्षणीय श्रेष्ठ अन्नादि पदार्थों की प्राप्ति का सदा प्रयत्न किया करें। मधुर तथा सत्य वचनों से बड़ों के आशीर्वाद को, सुखप्रद व्यवहारों से गृहस्थसुख को और यज्ञादि से लोक में उत्तम स्थिति को प्राप्त करें ॥ १९ । २९ ॥ ●

हैमवर्चिः । **यज्ञः**=व्रतादि-समूहः । अनुष्टुप् । गान्धारः ॥

**मनुष्यैः सत्यं ग्राह्यमसत्यञ्च त्याज्यमित्याह ॥**

मनुष्यों को सत्य का ग्रहण और असत्य का त्याग करना चाहिए, इस विषय का उपदेश किया है ॥

**व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ ३० ॥**

**पदार्थः**—(**व्रतेन**) सत्यभाषणब्रह्मचर्य्यादिनियमेन (**दीक्षाम्**) ब्रह्मचर्य्यविद्यादिसुशिक्षा-प्रज्ञाम् (**आप्नोति**) (**दीक्षया**) (**आप्नोति**) (**दक्षिणाम्**) प्रतिष्ठां श्रियं वा (**दक्षिणा**) दक्षिणया । अत्र विभक्तिलोपः । (**श्रद्धाम्**) श्रत्सत्यं दधाति ययेच्छया ताम् । श्रदिति सत्यना० ॥ निघं० ३ । १० ॥ (**आप्नोति**) (**श्रद्धया**) (**सत्यम्**) सत्सु=नित्येषु पदार्थेषु व्यवहारेषु वा साधुस्तं परमेश्वरं धर्मं वा (**आप्यते**) प्राप्यते ॥ ३० ॥

**अन्वयः**—यो बालकः कन्यका मनुष्यो वा व्रतेन दीक्षामाप्नोति दीक्षया दक्षिणामाप्नोति दक्षिणा श्रद्धामाप्नोति तथा श्रद्धया वा येन सत्यमाप्यते स सुखी भवति ॥ ३० ॥

**प्रमाणार्थ**—(**श्रद्धाम्**) श्रत्=सत्यं० । 'श्रत्' पद निघं० (३ । १०) में सत्य-नामों में पठित है ॥

**सपदार्थान्वयः**—**यो बालकः कन्यका मनुष्यो वा व्रतेन** सत्यभाषणब्रह्मचर्य्यादिनियमेन **दीक्षां** ब्रह्मचर्य्यविद्यादिसुशिक्षाप्रज्ञाम् **आप्नोति, दीक्षया दक्षिणां** प्रतिष्ठां श्रियं वा **आप्नोति, दक्षिणा** दक्षिणया **श्रद्धां** श्रत्=सत्यं दधाति ययेच्छया ताम् **आप्नोति तथा श्रद्धया वा**

**भाषार्थ**—जो बालक, कन्या वा मनुष्य—(व्रतेन) सत्यभाषण एवं ब्रह्मचर्य आदि के नियम से (दीक्षाम्) ब्रह्मचर्य, विद्यादि, सुशिक्षा और प्रज्ञा को (आप्नोति) प्राप्त करता है, (दीक्षया) उक्त दीक्षा से (दक्षिणाम्) प्रतिष्ठा वा श्री को (आप्नोति) प्राप्त करता है, (दक्षिणा) दक्षिणा

धेन सत्यं सत्सु=नित्येषु पदार्थेषु व्यवहारेषु वा साधुः स परमेश्वरो धर्मो वा आप्यते प्राप्यते; स सुखी भवति ॥ १९ । ३० ॥

से (श्रद्धाम्) सत्य को धारण करने की इच्छा को (आप्नोति) प्राप्त करता है; वैसे (श्रद्धया) श्रद्धा से जिसके द्वारा (सत्यम्) सत्=नित्य पदार्थों वा व्यवहारों में श्रेष्ठ परमेश्वर वा धर्म को (आप्यते) प्राप्त किया जाता है; वह सुखी होता है ॥ ३० ॥

**[मनुष्यो···व्रतेन दीक्षामाप्नोति, दीक्षया दक्षिणां, दक्षिणा श्रद्धां, श्रद्धया···सत्यमाप्यते]**

**भावार्थः**—कश्चिदपि मनुष्यो विद्या-सुशिक्षा-श्रद्धाभिर्विना सत्यान् व्यवहारान् प्राप्तुमसत्यांश्च त्यक्तुं न शक्नोति ॥ १९ । ३० ॥

**भावार्थ**—कोई भी मनुष्य विद्या, सुशिक्षा और श्रद्धा के विना सत्य व्यवहारों को प्राप्त और असत्य व्यवहारों का त्याग नहीं कर सकता ॥३०॥

**अन्यत्र व्याख्यात**—(क) जब मनुष्य ब्रह्मचर्यादि तथा सत्यभाषणादि व्रत अर्थात् नियम धारण करता है तब उस (**व्रतेन**) व्रत से उत्तम प्रतिष्ठा रूप (**दीक्षाम्**) दीक्षा को (**आप्नोति**) प्राप्त होता है (**दीक्षया**) ब्रह्मचर्य आदि आश्रमों के नियम पालन से (**दक्षिणाम्**) सत्कार पूर्वक धनादि को (**आप्नोति**) प्राप्त होता है और (**श्रद्धया**) सत्य धार्मिक जनों में प्रीति से (**सत्यम्**) सत्य विज्ञान वा सत्य पदार्थ मनुष्य को (**आप्यते**) प्राप्त होता है। इसलिए श्रद्धापूर्वक ब्रह्मचर्य और गृहाश्रम का अनुष्ठान करके वानप्रस्थ आश्रम अवश्य करना चाहिए ॥ **संस्कारविधि वानप्रस्थ०** ॥

(ख) (**व्रतेन दी०**) इस मन्त्र का अभिप्राय यह है कि जब मनुष्य धर्म को जानने की इच्छा करता है तभी सत्य को जानता है उसी सत्य में मनुष्यों को श्रद्धा करनी चाहिए असत्य में कभी नहीं। (**व्रतेन०**) जो मनुष्य सत्य के आचरण को दृढ़ता से करता है तब वह दीक्षा अर्थात् उत्तम अधिकार के फल को प्राप्त होता है (**दीक्षयाप्नोति**) जब मनुष्य उत्तम गुणों से युक्त होता है तब सब लोग सब प्रकार से उसका सत्कार करते हैं क्योंकि धर्म आदि शुभ गुणों से ही उस दक्षिणा को मनुष्य प्राप्त होता है, अन्यथा नहीं (**दक्षिणा श्र०**) जब ब्रह्मचर्य आदि सत्य व्रतों से अपना और दूसरे मनुष्यों का अत्यन्त सत्कार होता है तब उसी में दृढ़ विश्वास होता है क्योंकि सत्य धर्म का आचरण ही मनुष्यों का सत्कार कराने वाला है (**श्रद्धया०**) फिर सत्य के आचरण में जितनी-जितनी अधिक श्रद्धा बढ़ती जाती है उतना-उतना ही मनुष्य लोग व्यवहार और परमार्थ के सुख को प्राप्त होते जाते हैं अधर्माचरण से नहीं। इससे क्या सिद्ध हुआ कि सत्य की प्राप्ति के लिए सब दिन श्रद्धा और उत्साह आदि पुरुषार्थ को मनुष्य लोग बढ़ाते ही जायें जिससे सत्यधर्म की यथावत् प्राप्ति हो ॥ **ऋग्वेदादि० वेदोक्तधर्मविषयः** ॥

**भाष्यसार—यज्ञादि श्रेष्ठ व्रतों से ही सत्य की प्राप्ति होती है**—मनुष्य सत्यभाषणादि व्रतों से दीक्षा=सुशिक्षा को दीक्षा से दक्षिणा=प्रतिष्ठा को और दक्षिणा से श्रद्धा को प्राप्त करता है। श्रद्धा से सत्य=श्रेष्ठ व्यवहार, परमेश्वर, और धर्म की प्राप्ति होती है ॥ १९ । ३० ॥

हैमवर्चिः । **यज्ञः**=अग्निहोत्रम् । अनुष्टुप् । गान्धारः ॥

पुनर्मनुष्याः किं कुर्युरित्याह ॥

फिर मनुष्यों को क्या करना चाहिए, इस विषय का उपदेश किया है ॥

**एतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् । तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी सुते ॥ ३१ ॥**

**पदार्थः**—(**एतावत्**) एतत् परिमाणमस्य तत् (**रूपम्**) स्वरूपम् (**यज्ञस्य**) यजनकर्मणः

(यत्) (देवैः) विद्वद्भिः (ब्रह्मणा) परमेश्वरेण वेदचतुष्टयेन वा (कृतम्) निष्पादितं प्रकाशितं वा (तत्) परोक्षम् (एतत्) प्रत्यक्षम् (सर्वम्) (आप्नोति (यज्ञे) (सौत्रामणी) सूत्राणि=यज्ञोपवीतादीनि मणिना= ग्रन्थिना युक्तानि ध्रियन्ते यस्मिँस्तस्मिन् (सुते) सम्पादिते ॥ १९ । ३१ ॥

**अन्वयः**—यो मनुष्यो यद्देवैर्ब्रह्मणा यज्ञस्यैतावद् रूपं कृतं तदेतत् सर्वं सौत्रामणी सुते यज्ञ आप्नोति स द्विजत्वारम्भं करोति ॥ १९ । ३१ ॥

**सपदार्थान्वयः**—यो मनुष्यो यद् देवैः विद्वद्भिः **ब्रह्मणा** परमेश्वरेण वेदचतुष्टयेन वा **यज्ञस्य** यजनकर्मणः **एतावद्** एतत्परिमाणमस्य तत् **रूपं** स्वरूपं **कृतं** निष्पादितं प्रकाशितं वा **तत्** परोक्षम् **एतत्** प्रत्यक्षं **सर्वं सौत्रामणी** सूत्राणि= यज्ञोपवीतादीनि मणिना=ग्रन्थिना युक्तानि ध्रियन्ते यस्मिँस्तस्मिन् **सुते** सम्पादिते **यज्ञ आप्नोति, स द्विजत्वारम्भं करोति** ॥ १९ । ३१ ॥

**भाषार्थ**—जो मनुष्य—जो (देवैः) विद्वानों के द्वारा (ब्रह्मणा) परमेश्वर वा चारों वेदों से (यज्ञस्य) यज्ञ कर्म का (एतावद्) इतना (रूपम्) स्वरूप (कृतम्) निष्पन्न वा प्रकाशित किया है (तत्) उस (एतत्) इस (सर्वम्) सबको—(सौत्रामणी) सूत्र=यज्ञोपवीत आदि मणि=ग्रन्थि से युक्त जिसमें धारण किए जाते हैं उस (सुते) सम्पादित (यज्ञे) यज्ञ में (आप्नोति) प्राप्त करता है वह द्विजत्व को आरम्भ करता है ॥ १९ । ३१ ॥

[यो मनुष्यो यद् देवैः···यज्ञस्यैतावद् रूपं कृतं, तदेतत् सर्वं······यज्ञ आप्यते]

**भावार्थः**—विद्वद्भिर्मनुष्यैर्यावद् यज्ञानुष्ठानानुसन्धानं क्रियेत तावदेवानुष्ठाय महोत्तमं यज्ञफलमाप्तव्यम् ॥ १९ । ३१ ॥

**भावार्थ**—विद्वान् मनुष्य—जितना यज्ञानुष्ठान का अनुसन्धान कर सकें उतना करके अत्युत्तम यज्ञ-फल को प्राप्त करें ॥ १९। ३१ ॥

**भाष्यसार**—**यज्ञ करना प्रमुख कर्तव्य है**—चारों वेदों के विद्वानों ने यज्ञ का जो स्वरूप प्रकाशित किया है, जिस यज्ञ के करने का अधिकार यज्ञोपवीत आदि श्रेष्ठ व्रत धारण करने पर मिलता है। उसको करने से मनुष्य द्विजत्व को प्राप्त करता है ॥ १९ । ३१ ॥

हैमवर्चिः । **निचृदतिजगती**ः=**परमैश्वर्ययुक्तो जनः** । इन्द्रः । निषादः ॥

**पुनस्तमेव विषयमाह ॥**

फिर भी उसी विषय को अगले मन्त्र में कहा है ॥

**सुरावन्तं बर्हिषदँ सुवीरं यज्ञँ हिन्वन्ति महिषा नमोभिः ।**
**दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ॥ ३२ ॥**

**पदार्थः**—(**सुरावन्तम्**) सुराः=प्रशस्ताः सोमा विद्यन्ते यस्मिंस्तम् (**बर्हिषदम्**) यो बर्हिष्याकाशे सीदति तम् (**सुवीरम्**) शोभना वीराः=शरीरात्मबलयुक्ता यस्मात्तम् (**यज्ञम्**) (**हिन्वन्ति**) वर्धयन्ति (**महिषाः**) महान्तः=पूजनीयाः (**नमोभिः**) अन्नैः (**दधानाः**) धरन्तः (**सोमम्**) ऐश्वर्य्यम् (**दिवि**) शुद्धे व्यवहारे (**देवतासु**) विद्वत्सु (**मदेम**) हर्षेम (**इन्द्रम्**) परमैश्वर्ययुक्तञ्जनम् (**यजमानाः**) ये यजन्ति ते विद्वांसः (**स्वर्काः**) शोभना अर्का=अन्नादयः पदार्था येषान्ते ॥ ३२ ॥

**अन्वयः**—हे मनुष्याः ! ये महिषास्स्वर्का यजमाना नमोभिः सुरावन्तं बर्हिषदं सुवीरं यज्ञं हिन्वन्ति ते दिवि देवतासु सोममिन्द्रं दधानाः सन्तो वयञ्च मदेम ॥ ३२ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! ये **महिषाः** महान्तः पूजनीयाः, **स्वर्काः** शोभना अर्का=अन्नादयः पदार्था येषान्ते, **यजमानाः** ये यजन्ति ते विद्वांसः, **नमोभिः** अन्नैः **सुरावन्तं** सुराः=प्रशस्ताः सोमा विद्यन्ते यस्मिंस्तं **बर्हिषदं** यो बर्हिष्याकाशे सीदति तं **सुवीरं** शोभना वीराः=शरीरात्मबलयुक्ता यस्मात्तं **यज्ञं हिन्वन्ति** वर्धयन्ति, **ते दिवि** शुद्धे व्यवहारे **देवतासु** विद्वत्सु **सोमम्** ऐश्वर्यम् **इन्द्रं** परमैश्वर्ययुक्तञ्जनं **दधानाः** धरन्तः **सन्तो वयञ्च मदेम** हर्षेम ॥ १९ । ३२ ॥

**भाषार्थ**—हे मनुष्यो ! जो (महिषाः) महान् पूजनीय, (स्वर्काः) उत्तम अर्क=अन्न आदि पदार्थों वाले, (यजमानाः) यज्ञ करने वाले विद्वान् लोग (नमोभिः) अन्नों से (सुरावन्तम्) प्रशस्त सोम वाले, (बर्हिषदम्) आकाश में स्थित होने वाले, (सुवीरम्) उत्तम वीरों को शरीर और आत्मा के बल से युक्त करने वाले (यज्ञम्) यज्ञ को (हिन्वन्ति) बढ़ाते हैं; वे—(दिवि) शुद्ध व्यवहार में (देवतासु) विद्वानों में (सोमम्) ऐश्वर्य को (इन्द्रम्) परम-ऐश्वर्य से युक्त पुरुष को (दधानाः) धारण करते हुए हर्षित होते हैं, और हम भी (मदेम) प्रसन्न होवें ॥ १९ । ३२ ॥

**[ ये—यजमाना नमोभिः—यज्ञं हिन्वन्ति ते दिवि देवतासु सोममिन्दुं दधानाः सन्तो वयं च मदेम ]**

**भावार्थः**—ये मनुष्या अन्नाद्यैश्वर्यं सञ्चित्य, तेन विदुषः सन्तोष्य, सद्विद्याः सुशिक्षाः संगृह्य सर्वहितैषिणः स्युस्तेऽत्र पुत्रकलत्रानन्दमाप्नुवन्तु ॥ १९ । ३२ ॥

**भावार्थ**—जो मनुष्य अन्न आदि ऐश्वर्य का संचय करके, उससे विद्वानों को सन्तुष्ट कर, सद्विद्या और सुशिक्षाओं को ग्रहण करके सबके हितैषी होते हैं, वे यहाँ पुत्र और कलत्र=स्त्री सम्बन्धी आनन्द को प्राप्त होते हैं ॥ १९ । ३२ ॥

**भा० पदार्थः**—मदेम=पुत्रकलत्रानन्दमाप्नुयाम ।

**भाष्यसार—परमैश्वर्य की प्राप्ति के साधन**—जो मनुष्य स्वर्काः=उत्तम अन्नादि पदार्थों से सम्पन्न हैं, यजनशील हैं, शारीरिक और आत्मिक बल की प्राप्ति के लिए विविध यज्ञों को बढ़ाते हैं, उत्तम ओषधियों के प्रशस्त सोम का पान करके सर्वोपरि रहते हैं और विद्वानों का सत्कार करके उत्तम शिक्षाओं को प्राप्त करते रहते हैं, वे मनुष्य परमैश्वर्य को प्राप्त करते हैं ॥ १९ । ३२ ॥ ●

हैमवर्चिः । **इन्द्रः=ऐश्वर्यवान्** । त्रिष्टुप् । धैवतः ॥

**किम्भूता जना धन्या इत्याह ॥**

कैसे पुरुष धन्यवाद के योग्य हैं, इस विषय का उपदेश किया है ॥

**यस्ते रसः सम्भृत ऽ ओषधीषु सोमस्य शुष्मः सुरया सुतस्य ।**
**तेन जिन्व यजमानं मदेन सरस्वतीमश्विनाविन्द्रमग्निम् ॥ ३३ ॥**

**पदार्थः**—(यः) (ते) तव (रसः) आनन्दः (सम्भृतः) सम्यग्धृतः (**ओषधीषु**) सोमलतादिषु (**सोमस्य**) अंशुमदादिसंज्ञस्य चतुर्विंशतिधा भिद्यमानस्य (**शुष्मः**) शुष्मं=बलं विद्यते यस्मिन् सः (**सुरया**) शोभनदानशीलया स्त्रिया (**सुतस्य**) निष्पादितस्य (तेन) (**जिन्व**) प्रीणीहि (**यजमानम्**) सर्वेभ्यः सुखं ददमानम् (**मदेन**) आनन्दप्रदेन (**सरस्वतीम्**) प्रशस्तविद्यायुक्तां स्त्रियम् (**अश्विनौ**) विद्याव्याप्तावध्यापकोपदेशकौ (**इन्द्रम्**) ऐश्वर्ययुक्तं सभासेनेशम् (**अग्निम्**) पावकवच्छत्रुदाहकं योद्धारम् ॥ १९ । ३३ ॥

**अन्वयः**—हे विद्वन् ! यस्त ओषधीषु वर्त्तमानस्य सुतस्य सोमस्य सुरया सम्भृतः शुष्मो रसोऽस्ति तेन मदेन यजमानं सरस्वतीमश्विनाविन्द्रमग्निञ्च जिन्व ॥ १९ । ३३ ॥

**सपदार्थान्वयः**—हे **विद्वन्** ! **यस्ते** तव **ओषधीषु** सोमलतादिषु **वर्त्तमानस्य सुतस्य** निष्पादितस्य **सोमस्य** अंशुमदादिसंज्ञस्य चतुर्विंशतिधा भिद्यमानस्य **सुरया** शोभनदानशीलया स्त्रिया **सम्भृतः** सम्यग्धृतः **शुष्मः** शुष्मं=बलं विद्यते यस्मिन् सः **रसः** आनन्दः **अस्ति, तेन मदेन** आनन्दप्रदेन **यजमानं** सर्वेभ्यः सुखं ददमानं **सरस्वतीं** प्रशस्तविद्यायुक्तां स्त्रियम् **अश्विनौ** विद्याव्याप्तावध्यापकोपदेशकौ **इन्द्रम्** ऐश्वर्ययुक्तं सभासेनेशम् **अग्नि** पावकवच्छत्रुदाहकं योद्धारं **च जिन्व** प्रीणीहि ॥ १९ । ३३ ॥

**भाषार्थ**—हे विद्वान् ! जो (ते) तेरा—(ओषधीषु) सोमलता आदि ओषधियों में वर्तमान (सुतस्य) सवन किए हुए (सोमस्य) अंशुमान् आदि नाम से २४ चौबीस प्रकार के सोम का—(सुरया) उत्तम दानशील स्त्री के द्वारा (सम्भृतः) ठीक रखा हुआ (शुष्मः) बलकारी (रसः) आनन्ददायक रस है; (तेन) उस (मदेन) आनन्दप्रद रस से (यजमानम्) सबको सुख देने वाले पुरुष को, (सरस्वतीम्) प्रशस्त विद्या से युक्त स्त्री को, (अश्विनौ) विद्या में व्याप्त अध्यापक और उपदेशक को, (इन्द्रम्) ऐश्वर्य से युक्त सभापति और सेनापति को और (अग्निम्) अग्नि के समान शत्रुओं के दाहक योद्धा को (जिन्व) तृप्त कर ॥ १९ । ३३ ॥

(**[हे विद्वन् ! यस्त ओषधिषु सोमरसस्य······सुरया सम्भृतः······रसोऽस्ति तेन मदेन······जिन्व]**

**भावार्थः**—ये विद्वांसो जना महौषधिसारं स्वयं संसेव्यान्यान् सेवयित्वा सततमानन्दं वर्द्धयेयुस्ते धन्याः सन्ति ॥ १९ । ३३ ॥

**भावार्थ**—जो विद्वान् पुरुष—महौषधि के सार को स्वयं सेवन करके एवं अन्यों को सेवन कराकर सदा आनन्द को बढ़ाते हैं वे धन्य हैं । ॥ १९ । ३३ ॥

**भाष्यसार—कौन ऐश्वर्यवान् धन्य है ?**—जो मनुष्य ऐश्वर्यसम्पन्न होकर ओषधियों के सेवन किये गये बलकारी आनन्दप्रद विविध सोमरसों से परोपकारी विद्वान् तथा विदुषी स्त्रियों को अध्यापक और उपदेशकों को और सभापति तथा वीर सेनापति को तृप्त करते हैं, वे धन्यवाद के योग्य हैं ॥ १९ । ३३ ॥ ●

हैमवर्चिः । **सोमः**=ओषधिरसः । त्रिष्टुप् । धैवतः ॥

**कीदृशाः जनाः सुखिनो भवन्तीत्याह ॥**

कैसे पुरुष सुखी होते हैं, इस विषय का उपदेश किया है ॥

**यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय ।**
**इमं तꣳ शुक्रं मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि ॥ ३४ ॥**

**पदार्थः**—(यम्) (**अश्विना**) सभासेनेशौ (**नमुचेः**) यो जलं न मुञ्चति तस्मात् (**आसुरात्**) असुरस्य=मेघस्यायं तस्मात् (**अधि**) (**सरस्वती**) विदुषी स्त्री (**असुनोत्**) सुनोति (**इन्द्रियाय**) धनायेन्द्रियबलाय वा (**इमम्**) (**तम्**) (**शुक्रम्**) शीघ्रं बलकरम् (**मधुमन्तम्**) प्रशस्तमधुरादिगुणयुक्तम् (**इन्दुम्**) परमैश्वर्यकारकम् (**सोमम्**) पुरुषार्थे प्रेरकम् (**राजानम्**) प्रकाशमानम् (**इह**) अस्मिन् संसारे (**भक्षयामि**) भुञ्जे भोजयामि वा ॥ १९ । ३४ ॥

**अन्वयः**—मनुष्याः ! इहेन्द्रियाय यं नमुचेरासुरादधि शुक्रं मधुमन्तमिन्दुं राजानं सोमं सरस्वत्यसुनोदश्विना सुनुतां तमिममहं भक्षयामि ॥ ३४ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! इह अस्मिन् संसारे **इन्द्रियाय** धनायेन्द्रियबलाय वा **यं नमुचेः** यो जलं न मुञ्चति तस्माद् **आसुराद्** असुरस्य=मेघस्यायं तस्माद् **अधि शुक्रं** शीघ्रं बलकरं **मधुमन्तं** प्रशस्तमधुरादिगुणयुक्तम् **इन्दुं** परमैश्वर्यकारकं **राजानं** प्रकाशमानं **सोमं** पुरुषार्थे प्रेरकं **सरस्वती** विदुषी स्त्री **असुनोत्** सुनोति, **अश्विना** सभासेनेशौ **सुनुतां**, **तमिममहं भक्षयामि** भुञ्जे-भोजयामि वा ॥ १९ । ३४ ॥

**भाषार्थ**—हे मनुष्यो ! (इह) इस संसार में (इन्द्रियाय) धन वा इन्द्रिय-बल के लिए (यम्) जिस (नमुचेः) जल को मुक्त न करने वाले (आसुरात्) मेघ से (अधि) अधिक (शुक्रम्) शीघ्र बलकारी (मधुमन्तम्) प्रशस्त मधुर आदि गुणों से युक्त (इन्दुम्) परम ऐश्वर्य कारक (राजानम्) प्रकाशमान (सोमम्) पुरुषार्थ में प्रेरक सोम को (सरस्वती) विदुषी स्त्री (असुनोत्) निचोड़ती है, (अश्विना) सभापति और सेनापति भी निचोड़ें, उसका मैं (भक्षयामि) भक्षण करूँ और कराऊँ ॥

[इहेन्द्रियाय...सोमम्...असुनोत्...तमिममहं भक्षयामि]

**भावार्थः**—ये मनुष्याः सारान्नरसभोजिनो भवन्ति ते बलिष्ठेन्द्रियाः सन्तः सदानन्दं भुञ्जते ॥

**भावार्थ**—जो मनुष्य—सार, अन्न, रस का भोजन करने वाले होते हैं वे बलिष्ठ इन्द्रियों वाले होकर सदा आनन्द भोगते हैं ॥ १९ । ३४ ॥

**भाष्यसार—सोम-पानकर्त्ता सदा स्वस्थ रहता है**—जो सोम=ओषधियों का रस शीघ्र बलप्रद है, मधुरतादि गुणों से सम्पन्न है, परमैश्वर्य-कारक है, सर्वथा प्रशस्त होने से प्रकाशमान है, और पुरुषार्थ का प्रेरक है, उसका पान करने से इन्द्रियों का बल बढ़ता है और मनुष्य सदा स्वस्थ रहता है ॥ १९ । ३४ ॥

हैमवर्चिः । **सोमः**=ओषधिरसः । विराट् त्रिष्टुप् । धैवतः ॥

**मनुष्यैः सर्व आनन्दयितव्य इत्याह ॥**

मनुष्यों को चाहिए कि सबको आनन्द करें, इस विषय का उपदेश किया है ॥

**यदत्र रिप्तꣳ रसिनः सुतस्य यदिन्द्रो ऽ अपिबच्छचीभिः ।**
**अहं तदस्य मनसा शिवेन सोमꣳ राजानमिह भक्षयामि ॥ ३५ ॥**

**पदार्थः**—(यत्) (अत्र) अस्मिन् संसारे (**रिप्तम्**) लिप्तं=प्राप्तम् । **अत्र लकारस्य रेफादेशः** (**रसिनः**) प्रशस्तो रसो विद्यते यस्मिंस्तस्य (**सुतस्य**) निष्पादितस्य (**यत्**) यम् (**इन्द्रः**) सूर्यः (**अपिबत्**) (**शचीभिः**) क्रियाभिः । **शचीति कर्मना० ॥ निघं० २ । १ ॥** (**अहम्**) (**तत्**) तम् (**अस्य**) (**मनसा**) (**शिवेन**) मङ्गलमयेन (**सोमम्**) ओषधीरसम् (**राजानम्**) देदीप्यमानम् (इह) (**भक्षयामि**) ॥ ३५ ॥

**प्रमाणार्थ**—(रिप्तम्) लिप्तं=प्राप्तम् । यहाँ लकार के स्थान में रेफ आदेश है । (**शचीभिः**) क्रियाभिः । 'शची' पद निघं० (२ । १) में कर्म-नामों में पठित है ॥

**अन्वयः**—हे मनुष्याः ! यथाहमिहास्य सुतस्य रसिनो यदत्र रिप्तमस्तीन्द्रश्शचीभिर्यदपिबत्तद् राजानं सोमं च शिवेन मनसा भक्षयामि तथा यूयमपि भक्षयत ॥ ३५ ॥

**सपदार्थान्वयः**—हे मनुष्याः ! **यथाहमिहास्य सुतस्य** निष्पादितस्य **रसिनः** प्रशस्तो रसो विद्यते यस्मिंस्तस्य **यदत्र** अस्मिन् संसारे **रिप्तं** लिप्तं=प्राप्तम् **अस्ति, इन्द्रः** सूर्यः **शचीभिः** क्रियाभिः **यद्** यम् **अपिबत्तद्** तं **राजानं** देदीप्यमानं **सोमम्** ओषधीरसं **च शिवेन** मङ्गलमयेन **मनसा भक्षयामि तथा यूयमपि भक्षयत** ।। ३५ ।।

**भाषार्थ**—हे मनुष्यो ! जैसे मैं—यहाँ इस (सुतस्य) तैयार किए हुए (रसिनः) उत्तम रस वाले पदार्थ का—(यद्) जो (अत्र) इस संसार में (रिप्तम्) प्राप्त है, (इन्द्रः) सूर्य (शचीभिः) क्रियाओं से (यत्) जिसको (अपिबत्) पीता है (तत्) उस (राजानम्) देदीप्यमान राजाओं (सोमम्) ओषधिरस का (शिवेन) मङ्गलमय (मनसा) मन से (भक्षयामि) भक्षण करता हूँ वैसे तुम भी भक्षण करो ।। १९ । ३५ ।।

[हे मनुष्याः ! यथा···इन्द्रः शचीभिर्यदपिबत् तद्···सोमं च···भक्षयामि]

**भावार्थः**—हे मनुष्याः ! यथा सूर्यः स्वकिरणैर्जलान्याकृष्य, वर्षित्वा सर्वान् सुखयति तथैवानुकूलाभिः क्रियाभी रसान् संसेव्य, बलमुन्नीय, यशोवृष्टया सर्वान् यूयमानन्दयत ।। १९ । ३५ ।।

**भावार्थ**—हे मनुष्यो ! जैसे—सूर्य अपनी किरणों से जलों का आकर्षण करके, वर्षा करके सबको सुख पहुँचाता है वैसे ही अनुकूल क्रियाओं से रसों का सेवन करके, बल को उन्नत करके, यश की वर्षा से सबको तुम आनन्दित करो ।। ३५ ।।

**भा० पदार्थः**—शचीभिः=अनुकूलाभिः क्रियाभिः ।

**भाष्यसार**—**ओषधिरस परम कल्याणकारक है**—सब मनुष्यों को उचित है कि वे ओषधि-विज्ञान को जानकर रोगनाशक, ओषधियों के रस का ही पान किया करें । तभी कल्याण तथा सुखों की वर्षा होती है । यह सोमरस शिवेन मनसा अर्थात् परिश्रम से सिद्ध किया गया हो, चोरी आदि कर्मों से दूसरों को दुःख देकर नहीं, तभी परम यशस्वी होता है ।। १९ । ३५ ।। ●

प्रजापतिः । **पितरः**=पितृ-आदयः । निचृदष्टि त्रिष्टुप् । मध्यमः ।।

**पित्रपत्यादिभिरितरेतरं कथं वर्त्तितव्यमित्याह ।।**

माता पिता पुत्रादि को परस्पर कैसे वर्त्तना चाहिए, इस विषय का उपदेश किया है ।।

**पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः । स्वधायिभ्यः स्वधा नमः । अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम् ।।३६।।**

**पदार्थः**—(**पितृभ्यः**) पालकेभ्यो जनकाध्यापकादिभ्यः (**स्वधायिभ्यः**) ये स्वधामुदकमन्नं वैतुं=प्राप्तुं शीलास्तेभ्यः । स्वधेत्युदकना० ।। निघं० १ । १२ ।। स्वधेत्यन्नना० ।। निघं० २ । ७ ।। (**स्वधा**) अन्नम् (**नमः**) सत्करणम् (**पितामहेभ्यः**) ये पितॄणां पितरस्तेभ्यः (**स्वधायिभ्यः**) (**स्वधा**) स्वान् दधाति यया सा क्रिया (**नमः**) नमनम् (**प्रपितामहेभ्यः**) ये पितामहानां पितरस्तेभ्यः (**स्वधायिभ्यः**) (**स्वधा**) स्वेन धारिता सेवा (**नमः**) अन्नादिकम् (**अक्षन्**) अदन्तु । योऽद्धातोः स्थाने घस्लृआदेशस्तस्य लुङि रूपम् (**पितरः**) ज्ञानिनः (**अमीमदन्त**) अतिशयेन हर्षयत (**पितरः**) (**अतीतृपन्त**) अतिशयेन तर्पयत (**पितरः**) (**पितरः**) (**शुन्धध्वम्**) पवित्रीकुरुत ।। १९ । ३६ ।।

**प्रमाणार्थ**—(स्वधायिभ्यः) स्वधा शब्द निघं० (१ । १२) में उदक=जल—नामों में पठित

है और निघं० (२ । ७) में अन्न-नामों में पठित है। (अक्षन्) अदन्तु। यह 'अद्' धातु के स्थान में जो 'घस्लृ' आदेश होता है उसका यह लुङ् लकार में रूप है ॥

**अन्वयः**—अस्माभिः पुत्रशिष्यादिमनुष्यैर्येभ्यः स्वधायिभ्यः पितृभ्यः स्वधा नमः स्वधायिभ्यः पितामहेभ्यः स्वधा नमः स्वधायिभ्यः प्रपितामहेभ्यः स्वधा नमः क्रियते। हे पितरस्ते भवन्तोऽस्मत्सुसंस्कृतान्यन्नादीन्यक्षन्। हे पितरो! यूयमानन्दिता भूत्वाऽस्मानमीमदन्त। हे पितरो! यूयं तृप्ता भूत्वास्मानतीतृपन्त। हे पितरो! यूयं शुद्धा भूत्वाऽस्मान् शुन्धध्वम् ॥ १६। ३६ ॥

**सपदार्थान्वयः**—अस्माभिः पुत्रशिष्यादिमनुष्यैर्येभ्यः **स्वधायिभ्यः** ये स्वधामुदकमन्नं वैतुं=प्राप्तुं शीलास्तेभ्यः **पितृभ्यः** पालकेभ्यो जनकाध्यापकादिभ्यः **स्वधा** अन्नं **नमः** सत्करणम्, **स्वधायिभ्यः** ये स्वधामुदकमन्नं वैतुं=प्राप्तुं शीलास्तेभ्यः **पितामहेभ्यः** ये पितॄणां पितरस्तेभ्यः **स्वधा** स्वान् दधाति यया सा क्रिया **नमः** नमनम्, **स्वधायिभ्यः** ये स्वधामुदकमन्नं वैतुं=प्राप्तुं शीलास्तेभ्यः **प्रपितामहेभ्यः** ये पितामहानां पितरस्तेभ्यः **स्वधा** स्वेन धारिता सेवा **नमः** अन्नादिकं **क्रियते**।

हे पितरः ज्ञानिनः! **ते भवन्तोऽस्मत्सुसंस्कृतान्यन्नादीन्यक्षन्** अदन्तु।

हे पितरः! ज्ञानिनः! **यूयमानन्दिता भूत्वाऽस्मानमीमदन्त** अतिशयेन हर्षयत।

हे पितरः! ज्ञानिनः! **यूयं तृप्ता भूत्वास्मानतीतृपन्त** अतिशयेन तर्पयत।

हे पितरः! ज्ञानिनः! **यूयं शुद्धा भूत्वाऽस्मान् शुन्धध्वम्** पवित्रीकुरुत ॥ १६। ३६ ॥

**भाषार्थ**—हम पुत्र, शिष्य आदि मनुष्य—जिन (स्वधायिभ्यः) स्वधा=जल वा अन्न को प्राप्त करने वाले (पितृभ्यः) पालक पिता और अध्यापक आदि के लिए (स्वधा) अन्न प्रदान एवं (नमः) सत्कार करते हैं; (स्वधायिभ्यः) स्वधा=जल वा अन्न को प्राप्त करने वाले (पितामहेभ्यः) पिता के पिता अर्थात् दादा जनों के लिए (स्वधा) स्वजनों का धारण-पोषण एवं (नमः) नमस्कार करते हैं, (स्वधायिभ्यः) स्वधा=जल वा अन्न को प्राप्त करने वाले (प्रपितामहेभ्यः) पितामहों के भी पिता अर्थात् परदादा जनों के लिए (स्वधा) सेवा (नमः) अन्न आदि प्रदान करते हैं—

हे (पितरः) ज्ञानी पितर लोगो! सो आप हमारे उत्तम रीति से संस्कृत अन्न आदि को (अक्षन्) खाओ।

हे (पितरः) ज्ञानी पितर लोगो! आप—आनन्दित होकर हमें (अमीमदन्त) अत्यन्त हर्षित करो।

हे (पितरः) ज्ञान पितर लोगो! तुम—तृप्त होकर हमें (अतीतृपन्त) अत्यन्त तृप्त करो।

हे (पितरः) ज्ञानी पितर लोगो! तुम—शुद्ध होकर हमें (शुन्धध्वम्) पवित्र करो ॥ १६। ३६ ॥

[अस्माभिः पुत्रशिष्यादिमनुष्यैर्येभ्यः स्वधायिभ्यः पितृभ्यः स्वधा, नमः ··· क्रियते]

**भावार्थः**—हे पुत्रशिष्यस्नुषादयो जनाः। यूयमुत्तमैरन्नादिभिः पित्रादीन् वृद्धान् सततं सत्कुरुत।

**भावार्थ**—हे पुत्र, शिष्य, स्नुषा=पुत्रवधू आदि लोगो! तुम—अन्न आदि पदार्थों से पिता आदि वृद्ध जनों का सदा सत्कार करो।

[हे पितरः! यूयं···अस्मानमीमदन्त]

पितरो युष्मानप्यानन्दयेयुः।

पितर लोग तुम्हें भी आनन्दित करें।

